# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




३४ वर्षे
३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे, वै० सं० २०३६
दिसम्बर, मार्च, १९७९-८० ई०

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

१. **शुक्लयजुर्वेदकाण्वसंहिता**—[उत्तरविंशतिः] संहितेयं सायणभाष्यसहिता प्रकाशिता। सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— २२-००

२. **वाक्यपदीयम्**— [तृतीयकाण्डस्य द्वितीयो भागः] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— १०७-००

३. **महाभाष्यनिगूढाकूतयः**— अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च-डॉ० देवस्वरूपमिश्रः—२६-८०

४. **व्याकरणदर्शनप्रतिमा**— आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति— ३६-६०

५. **बोधायनशुल्बसूत्रम्**— ग्रन्थोऽयं श्रीव्यंकटेश्वरदीक्षितविरचितया बोधायनशुल्वमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्बसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैःसंवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— ७५-००

६. **तन्त्ररत्नम्**— [पञ्चमभागः] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते—४६-६०

७. **तन्त्रसङ्ग्रहः**— [तृतीयो भागः] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— ९२-२०

८. **योगिनीहृदयम्**— [तृतीयसंस्करणम्] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— ३३-४०

९. **रुद्रयामलम्**— तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्—६४-००

१०. **यन्त्रराजविचारविंशाध्यायी**—आचार्यनयनसुखोपाध्यायविरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां खलु सैद्धान्तिकं प्रायोगिकञ्च विवेचनं कृतं वर्तते— ११-००

११. **पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः**—अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च साङ्ख्य-योगपदार्था विवेचिताः— ३२-८०

१२. **भारतीयविचारदर्शनम्**— [द्वितीयो भागः] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाराणाम् ऐतिहासिकं तुलाबोधकञ्च विवेचनं कृतम्— १०५-६०

१३. **पालितिपिटकसद्दानुक्कमणिका**—पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽस्मिन् ग्रन्थे कृतो वर्तते— १००-६०

---

**प्राप्तिस्थानम्—विक्रयविभागः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००**

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः

उपसम्पादकः
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी



३४ वर्षे
३-४ अङ्कौ

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३४ वर्षः | मार्गशीर्ष-फाल्गुनपूर्णिमे, वि० सं० २०३६ | ३-४ अङ्कौ |
| --- | --- | --- |

# वेदान्तपरिभाषोक्तप्रमालक्षणसमीक्षा

आचार्यबदरीनाथशुक्लः,
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

* * *

अनधिगताबाधितार्थग्राहिज्ञानं प्रमेति प्रमालक्षणं वेदान्तपरिभाषायामुपन्यस्तम्। तत्र ज्ञानपदम् अनधिगताबाधितार्थग्राहिव्यावहारिकरजतादिगोचरेच्छादावतिव्याप्तिवारणाय सन्निविष्टम्। अनधिगतपदञ्चाबाधितार्थग्राहिस्मरणेऽतिव्याप्तिवारणायोपात्तम्। अबाधितपदञ्च शुक्तिरजतादिभ्रमेष्वतिव्याप्तिवारणार्थं समाविष्टम्।

अत्रेदं विचारणीयं यद् अनधिगतपदस्य शाङ्करवेदान्तरीत्या 'अज्ञानविषयः' इत्यर्थः स्वीकार्यः, अथवा न्यायादिरीत्या ज्ञानाविषय इत्यर्थः स्वीकार्यः। तत्र न प्रथमः स्वीकर्तुं शक्यः, पूर्वानुभूतदूरस्थविद्यमानपदार्थस्य स्मरणाभावकालेऽज्ञानविषयत्वेन तद्विषयके स्मरणे तत्पदोपादानेऽप्यतिव्याप्तेर्दुर्निवारत्वात्। तेनैव च शुक्तिरजतादेः प्रातिभासिकस्याज्ञातसत्ताया अनभ्युपगमेन तद्भ्रमेऽतिव्याप्तेर्वारणसम्भवेन अबाधितपदोपादानस्य वैयर्थ्यापत्तेश्च। द्वितीयोऽप्यर्थो नाङ्गीकर्तुं शक्यः। ज्ञानविषयत्वस्य केवलान्वयितया ज्ञानाविषयस्याप्रसिद्ध्याऽसम्भवापत्तेः।

अत्रोच्यते—उक्तदोषद्वयेन प्रथमस्य अनधिगतशब्दार्थत्वस्वीकारासम्भवेऽपि द्वितीयस्य तदर्थस्य परिष्कारेण स्वीकृतेर्निराबाधत्वात्। तथा ह्यनधिगतत्वं न ज्ञानाविषयत्वम् अर्थविशेषणतया ग्रहीतुं शक्यम्, असम्भवापत्तेः; किन्तु अनधिगतत्वं ज्ञानविशेषणमभ्युपेत्य परिष्कर्तुं सुकरम्। तथा हि—अनधिगतत्वं नाम ज्ञानविशिष्टान्यत्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वसमानविषयकत्व-स्वव्यवहितत्व-स्वोत्तरत्वैतच्चतुष्टयसम्बन्धेन। स्मरणं हि उक्तचतुष्टयसम्बन्धेन पूर्वानुभवात्मकज्ञानेन विशिष्टं भवति। अतस्तत्र ज्ञानविशिष्टान्यत्वासम्बन्धेन नातिव्याप्तिः। अत्र वैशिष्ट्यनियामकेषु स्वसामानाधिकरण्यानुपादाने चैत्रीयज्ञानविशिष्टत्वस्य मैत्रीये तज्ज्ञानसमानविषयकव्यवहितोत्तरेऽनुभवेऽव्याप्तिः स्यात्, अतस्तदुपादानम्।

एवं स्वसमानविषयकत्वानुपादाने अन्यविषयकचैत्रीयज्ञानविशिष्टत्वस्य तज्ज्ञानसमानाधिकरणव्यवहितोत्तरे चैत्रीयानुभवेऽव्याप्तिः स्यात्, अतस्तद्वारणार्थं तदुपादानम् ।

एवं व्यवहितत्वानुपादाने धारावाहिकप्रत्यक्षस्थले द्वितीयादिप्रत्यक्षेऽव्याप्तिः स्यात्, तद्वारणार्थं तद्ग्रहणम् । इत्थमेव स्वोत्तरत्वानुपादाने स्मृतिजनकेऽनुभवेऽव्याप्तिः स्यात्, अतस्तद्वारणार्थं तदुपादानम् ।

न चैवं स्मृतिधारास्थले द्वितीयादिस्मरणे प्रथमादिस्मरणस्य व्यवहितत्वाभावेनोक्तचतुष्टयसम्बन्धेन प्रमालक्षणस्यातिव्याप्तिः स्यादिति चेत्, मैवम्; द्वितीयादिस्मरणेष्वपि जनकीभूतपूर्वानुभवविशिष्टत्वस्य सम्भवेन ज्ञानविशिष्टान्यत्वस्यासम्भवात् ।

न च धारावाहिकप्रत्यक्षस्थले तृतीयप्रत्यक्षेऽव्याप्तिः । तत्र प्रथमप्रत्यक्षविशिष्टत्वस्य सत्त्वेन ज्ञानविशिष्टान्यत्वस्यासम्भवादिति वाच्यम्, स्वविशिष्टस्वसजातीयज्ञानानुत्तरत्वस्यापि निवेशेन दोषाभावात् ।

अबाधितत्वञ्चात्र न नाशाप्रतियोगित्वम्, घटादौ नाशप्रतियोगित्वस्य सत्त्वेन तद्गोचरप्रमायामव्याप्त्यापत्तेः; अपि तु स्वप्रतियोगित्वस्वसहोत्पन्ननाशप्रतियोग्युपादानकत्वैतदुभयसम्बन्धेन नाशविशिष्टान्यत्वम् । तथा च व्यावहारिकघटादीनामुपादानस्याखण्डब्रह्मसाक्षात्कारैकनिवर्त्यस्य मूलाज्ञानस्य काले एव नश्वरतया तत्र नाशस्योक्तद्वितीयसम्बन्धाभावेनोक्तोभयसम्बन्धेन नाशविशिष्टान्यत्वस्य निर्बाधतया न तद्गोचरप्रमायामव्याप्तिः । प्रातिभाषिकशुक्तिरजतादेस्तु स्वोपादानशुक्त्यज्ञानरूपमूलाज्ञानस्य नाशेन सहैव नश्वरतयोक्तोभयसम्बन्धेन नाशविशिष्टतया तत्रोक्तस्याबाधितत्वस्याभावेन न तद्भ्रमेऽव्याप्तिः ।

न चैवमपि कपालनाशनाश्यघटप्रमायामव्याप्तिरिति चेत्, नैवम्, अबाधितत्वस्यापि अर्थविशेषणत्वमनभ्युपगम्यज्ञानविशेषणत्वस्वीकारेण निर्दोषत्वसम्भवात् । तथा हि अबाधितत्वमुत्तरज्ञानाबाध्यत्वम् । तच्च ज्ञानविशिष्टान्यत्वम् । वैशिष्ट्यं च स्वपूर्वत्वस्वसामानाधिकरण्यस्वजन्याप्रामाण्यज्ञानाविशेष्यत्वैतत्त्रितयसम्बन्धेन ।

घटादिप्रमायामुत्तरवर्तिना ज्ञानेनाप्रामाण्यस्याग्रहात् तस्याज्ञानविशिष्टान्यतया नाव्याप्तिः । शुक्तिरजतादिभ्रमे चोत्तरवर्तिना रजतसाक्षात्कारेण चाप्रामाण्यज्ञानजननात् । तत्र ज्ञानविशिष्टत्वस्यैव सत्त्वेन नातिव्याप्तिः ।

न च वेदान्तसिद्धान्तरीत्या लक्षणस्यास्याशक्यसमर्थनत्वदोषोऽनिर्वार इति वाच्यम्, व्यवहारे भट्टनयस्य वेदान्तसिद्धान्ते स्वीकारेण तन्मतानुसारिणो लक्षणस्यापि वेदान्तसिद्धान्तानुगुणत्वोक्तेः सम्भवदुक्तिकत्वादिति कृतं विस्तरेण ।

# वैदिकं गुरुतत्त्वम्

प० पी० एन्० पट्टाभिरामशास्त्री 'विद्यासागरः'

❀ ❀ ❀

**'कृष्णं वन्दे जगद्गुरुम्'**

धर्मोऽधर्मः, पुण्यं पापम्, इहलोकः, परलोकः, जन्म पुनर्जन्म, दैवं पुरुषकारः, गुरुरन्तेवासीत्यादीनि नैकविधानि द्वन्द्वानि भारतवर्ष एवानिदम्प्रथमताकात्कालात् सम्प्रवृत्तानीति कथनं नायुक्तियुक्तम्। अत एव भारतं चिरन्तनैर्महनीयचरितैर्जगद्गुरुत्वेन **'पृथिव्यां सर्वमानवाः'** इति वदद्भिः परिगणितम्। प्राक्तनैर्भारतीयैर्जगत्तत्त्वपरिशीलनपरिपक्वमतिवैभवैर्महर्षिभिरुदात्तचरितैः कविभिर्वा यावन्ति दर्शनानि शास्त्रपुराणानि काव्यानि नाटकानि वानल्पानि प्रणीतानि, तेष्वनुसन्धीयमानेषु निश्चितं भवति यद् भारतस्य जगद्गुरुत्वे को वा विषय इति। शिक्षकोऽयं भारतदेशः। कस्यापि देशस्य समुन्नतिः सच्छिक्षकैरेव परिगणनीया। शिक्षकैर्देशनिवासिषु साधु शिक्षितेषु देशस्स्वयं शिक्षकस्सम्पद्यते। शिक्षाक्रमोऽयं नाद्यतनो भारते, किन्तु आ च भगवतः प्रथमायास्सृष्टेः, आ चैतन्निमेषादविच्छिन्नः प्रवर्तमानो विलसति। आचार्यचाणक्यस्स्वीयेऽर्थशास्त्रे सर्वप्रथमं विनयाधिकारं नाम प्रकरणं प्रवर्तयन्नमुमर्थमवद्योतयति यद् राजानो भवन्तु प्रजा वा, आढ्या भवन्तु निःस्वा वा सर्वस्यापि प्रथमं विनय आवश्यकः। विनयो नाम शिक्षणम्। तस्मिंश्च सम्पादिते देशस्सर्वात्मना क्षेमसुभिक्षस्स्यादिति।

पुरा तपोधनास्तपोवनेषु समवेता जगतीतले किमुत्कृष्टतमं वस्त्विति विचारं प्रवर्तितवन्तः। तत्र सत्यवचा राथीतरः सत्यमिति, तपोनिष्ठः पौरुशिष्टिस्तप इति, मौद्गल्यो नाकः स्वाध्यायप्रवचने एवेति क्रमशः प्रतिपादयाम्बभूवुः (तै० आ० ७·९)। स्वाध्यायप्रवचनयोरेवोत्कृष्टतमत्वमिति प्रतिपादयतो नाकस्यायमाशयो यत् सत्यस्य तपसश्च स्वाध्यायप्रवचनयोरेवान्तर्भाव इति। अथवा स्वाध्यायप्रवचनाभ्यां तयोस्सिद्धिरिति। युक्तमिदम्। **'ऋतञ्च स्वाध्यायप्रवचने च', 'सत्यञ्च स्वाध्यायप्रवचने च', 'स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः'** इत्यादिप्रमाणैः सत्यतपसोः स्वाध्यायेनैव सिद्धिः। तदिदं स्वाध्यायाध्ययनं वैदिकगुरुतत्त्वस्यावबोधकमिति मन्यामहे। अध्ययनञ्चात्र गुरुमुखोच्चारणानूच्चारणरूपमभिप्रेतम्, न केवलं पठनं वा वाचनं वा। अधिपूर्वकेङ्धातोस्स एवार्थ इति तन्त्रविदः। गुरुमुखोच्चारणानूच्चारणञ्च पूर्वोच्चारणसापेक्षोच्चारणरूपम्। तेन चातिचिरन्तनात् कालादायातं गुरुपारम्पर्यं सिध्यति। अस्य पारम्पर्यस्य चतुरेणापि कार्तान्तिकेन जन्मपत्रिका निर्मातुं न शक्यते। ऋतुलिङ्गन्यायेन सततं जवेन सञ्चरणशीलेऽस्मिन् संसारचक्रे कथमिदं पारम्पर्यं निर्णीयताम् अमुष्मात् कालात् पारम्पर्यमिदं प्रवृत्तमिति। आनुमानिकस्तु तन्निर्णयोऽव्यवस्थितः। शब्दस्तु **'स्वाध्यायोऽध्येतव्यः'** इति गुर्वध्ययनपूर्वकत्वमेवाध्ययनस्यावबोधयति। इन्द्रियाविषयस्य पदार्थस्य द्वयी गतिः—अनुपलब्धिगम्यत्वं शब्दगम्यत्वं वा। यच्छब्द आह तदस्माकं प्रमाणम्। शब्दो हि भूतं भवन्तं भविष्यन्तं व्यवहितं विप्रकृष्टञ्चार्थमवबोधयितुं क्षमः। स्वाध्यायाध्ययनविधिरनादितः कालात् समायान्तं गुरुपारम्पर्यं व्यवस्थापयति। तत्र प्राभाकराणां सिद्धान्तेऽनुसन्धीयमाने विशेषतोऽयमर्थः प्रतिभाति यत्तेषां मतेऽध्ययनमाचार्य-

करणविधिप्रयुक्तमिति सिद्धान्तः। अर्थात् स्वाध्यायवाक्यं नाध्ययनं विधत्ते, किन्तु **'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत'** इति।

**उपनीय तु यश्शिष्यं वेदमध्यापयेद् द्विजः।**
**सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥**

इति स्मृत्यनुमितः **'उपनीयाध्यापनेनाचार्यकं भावयत्'** इति वा विधिरध्यापनं विदधानो माणवककर्तृकाध्ययनेन विनानुपपन्नस्तत्कर्तृकमध्ययनमाक्षिपति। एवमाक्षेपेण लब्धमर्थं स्वाध्यायविधिरनुवदतीति। तत्र यूपाहवनीयादिशब्दा इवाचार्यशब्दो लौकिकार्थवाचक इत्यपि तेषां सिद्धान्तः। अलौकिकमर्थमवबोधयितुमेव प्रायो विधयः प्रवर्तन्ते। अत एव प्राभाकरमते विधेरर्थः कार्यमदृष्टं नियोग इति। एवञ्चालौकिकमाचार्यत्वं सम्पादयितुमध्यापनविधिरिति निर्गलितम्। इदमेव वैदिकं गुरुतत्त्वम्। अलौकिकञ्च वस्तु शब्दैकसमधिगम्यमित्यत्र न कश्चन सन्देहः। स च शब्दोऽबाधितानधिगतार्थावेदको भ्रमप्रमादालस्यादिदोषयुक्तपुरुषासंस्पृष्टश्चेष्यते। एतादृशश्च शब्दो वेद एव मन्त्रब्राह्मणात्मकः। अतो वेदोऽप्यस्माकं गुरुः।

गुरोः कार्यमनुशासनमुपदेशश्च। अनुशासको गुरुरुपदेशकश्च। विधिमुखेन वेदोऽनुशास्ति निषेधमुखेन चानुचितात् कर्मणो निवर्तयति। क्वचिच्च समुपदिशति। शिक्षकाणामग्रणीर्वेदो गुरूणामपि गुरुः। एवं हि शिक्षयति सः—**'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—सत्यं वद, धर्मं चर। स्वाध्यायान्मा प्रमदः।[1]'** इत्यादिना ज्ञातमनुष्ठेयमर्थमुपदिश्य सन्दिग्धेऽनुष्ठेयेऽर्थे निर्णयमपि प्रदर्शयति—**'अथ यदि ते कर्मविचिकित्सा वा, वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणास्सम्मर्शिनः, युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः, एष आदेशः, एष उपदेशः[2]'** इति। एवमादेशमुपदेशञ्च कुर्वन् वेदः कथमिव गुरुर्न स्यात्? इदमस्माकं वैदिकानां गुरुतत्त्वम्।

गुरोरासनेऽकथासनशब्दव्यवहारस्तान्त्रिकेषु दृश्यते। सहस्रदलकमले त्रिकोणाकारे मण्डलेऽकथासनं विन्यस्य मृगीमुद्रया गुरुपादुकां पूजयन्ति। अकारप्रभृतिक्षकारान्तमातृकाविन्यसनं तन्त्रशास्त्रोक्तक्रमेण विधाय तत्र पूजनमिति तेषां क्रमः। तत्र यावन्तो दार्शनिकाः श्रौतानां स्मार्तानाञ्च सूत्रकारा व्यासजैमिन्यापस्तम्बाश्वलायनप्रभृतयः स्वस्वग्रन्थारम्भेऽथशब्दं प्रयुञ्जाना इममर्थमवद्योतयन्तीव यद् यथाऽकारादिक्षकारान्तानामक्षराणां द्योतकतयाऽक्षमालाशब्दः प्रवृत्तः, तथैवाकथस्यैव **'अथ'**शब्दो गुरोर्द्योतक इति। गुरोः स्मरणञ्च सकलप्रत्यूहापहारकमिति वैदिकानां विश्वासः। अत एव ग्रन्थादावथशब्दप्रयोग इतीदं वैदिकं गुरुतत्त्वम्।

किञ्च, ग्रहण-धारण-ब्रह्मयज्ञाध्ययनारम्भावसरे **'श्रीगुरुभ्यो नमः, हरिः ओम्'** इति समुच्चार्यैवारम्भ इति शिक्षाग्रन्थानां नियमश्चिरन्तनशिष्टपरम्परागतः। सकलवृन्दापेक्षया गुरोः स्थानं निरतिशयम्। एकैकस्मिन् वृन्दारके विलक्षणा काचिदेकैव शक्तिः, गुरोस्तु सर्वशक्तिमत्त्वम्। अत एव—

**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।** इति।
**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।**
**गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥**

इत्यादयोऽनन्ता वादास्सम्प्रवृत्ताः। इदमस्माकं वैदिकानां गुरुतत्त्वम्।

---

१. तै० उ० १।१०; २. तदेव—१।१०।

प्रणवोपासकस्यापि सतस्तस्य नित्यकर्मानुष्ठानसमुच्चयप्रतिपादनावसरे **'प्रजा च स्वाध्यायप्रवचने च, प्रजनश्च स्वाध्यायप्रवचने च, प्रजातिश्च स्वाध्यायप्रवचने च'** इत्याम्नातम् । अन्तेवास्युपदेशावसरे **'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः[1]'** इति चाम्नातम् । अनेन सन्दर्भेणेदमवगन्तव्यं भवति यत् प्रजननं प्रजातन्त्वविच्छेदश्च स्वाध्यायाध्ययनाय तत्प्रवचनायैवेति । तेन च गुरुपारम्पर्यं यथावत् परिरक्षितं भवेदिति ।

तत्रोपाध्यायः, गुरुः, आचार्यश्चेति त्रयो विभागाः । इमे शब्दा न जातिप्रवृत्तिनिमित्तकाः, किन्तु क्रियाप्रवृत्तिनिमित्तकाः । एक एव विप्रः क्रियाभेदेन नामत्रयभाग् भवितुमर्हति ।

**एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ।**
**योऽध्यापयति वृत्यर्थमुपाध्यायस्स उच्यते ॥**
**निषेकादीनि कर्माणि यः करोति यथाविधि ।**
**सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥**
**उपनीय तु यश्शिष्यं वेदमध्यापयेद् द्विजः ।**
**सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥[2]**

इति तेषां लक्षणानि मन्वादिभिः प्रतिपादितानि ।

गुरुशब्दः पितर्यपि प्रयुज्यते । शब्दार्थकगृधातोः उप्रत्ययान्तो गुरुशब्दः शब्दरूपमर्थं निमित्तीकृत्य प्रवृत्तः । निमित्तभूतश्च शब्दो वेद एव । वेदशब्दान् तदर्थांश्च यथावद् यो ग्राहयति स गुरुराचार्यो वेति निष्पन्नम् । आसीत् कश्चन काल एतादृशोऽस्मद्देशे यत्र **'प्रजनश्च स्वाध्यायप्रवचने च'** इत्युक्तदिशा प्रजननं स्वाध्यायाध्ययनतत्प्रवचनोद्देशेनैव कुर्वाणा प्रजातन्त्वविच्छेदेन स्वस्वकुले गुरुपारम्पर्यं संररक्षुः । तेन प्रजासङ्ख्याधिक्यस्य सन्ततिनिरोधस्य खाद्यपदार्थन्यूनतायाश्च वार्तैव नोदेति स्म । इदन्तु निश्चितं यदेकैकस्य कृते योमार्गः सुविमृश्य चिरन्तनैः प्रकल्पितः, तस्माद्यदि च्युतिस्तर्हि सर्वा अपि विपत्तय एकदैव समापतेयुः । सम्प्रति वयं ता विपत्तीः प्रत्यक्षमनुभवामः । यतश्च वयं केवलमुपाध्यायास्स्मः, न गुरवो नाप्याचार्याः । अतः प्राक्तनं वैदिकं गुरुपारम्पर्यं यावत्पुनरपि पुरेव भारते न परिचालयामस्तावदस्माकं देश ईदृश एव इतिबाधादिभिर्ग्रस्तो दुःखबहुलस्स्यादिति सम्भावयामः । अन्ते च—

**यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ।**

इति छन्दसा गुरुपारम्पर्यरक्षकान् वेदविदो नमस्कृत्य लेखमुपसंहरामः ।

• • •

---

१. तै० उ० १।१०;　　२. मनुस्मृतिः—२।१४०–१४२ ।

# शब्दप्रामाण्यविचारः

श्रीरामवदनशुक्लः

प्रधानाचार्यचरः—दारागञ्ज-प्रयागस्थ श्रीरामदेशिक-संस्कृतमहाविद्यालयस्य

व्याकरणेन गृहीतशक्तिकप्रकृतिप्रत्ययेभ्य उपमानेन सादृश्यबोधकवाक्यार्थस्मरणेन गृहीत-शक्तिकगवयादिशब्देभ्यो व्यवहारेणानुमितशक्तिकेभ्यो घटादिशब्देभ्यस्तदीयस्मरणात्मकेभ्यो ज्ञानेभ्यो वृत्तिज्ञानसहकारेण तत्तत्पदार्थस्मृतिभ्यः खलेकपोतन्यायेन पदार्थसंसर्गबोधस्य संसर्गालिङ्गित-वाक्यार्थबोधस्य जनकत्वेन शब्दस्य वाक्यात्मकस्य शाब्दप्रमाजनकत्वात् शब्दस्य प्रमाणत्वम्। पदार्थमात्रज्ञानजनकत्वेन शब्दस्य प्रमाणत्वं न समस्ति, पदस्य पदार्थस्मारकत्वेनोद्बोधकत्वेनोप-योगात्। उद्बोधकानां प्रमाणत्वे स्वदृशा दृष्टचिन्तादीनामप्युद्बोधकत्वेन प्रामाण्यापत्तेः। अपि च प्रमाणकत्वं प्रमाणत्वम्, स्मृतीनां प्रमात्वाभावः, प्रमात्वस्यानुभवत्वव्याप्यत्वात्। पदार्थसंसर्गश्चापूर्वा एव भवन्ति, विशेष्यविशेषणभावसापेक्षत्वात्, विशेष्यविशेषणभावस्य नियतत्वेन ज्ञातुमशक्यत्वात्, अव्यवस्थितत्वाच्च। अत एव श्लोकानां नवीनकविकृतानामपूर्वत्वम्। नहि नव्यप्राच्यकविकृतपद्य-घटकपदार्थानामपूर्वत्वम्, तथासति प्रकृतिप्रत्ययनिष्ठशक्तिज्ञानजनकैकपाणिनीयव्याकरणजन्यशक्ति-ज्ञानाश्रयताया नव्यप्राच्यकवीनां समानत्वेन तेषां नव्यप्राच्यव्यवहारानुपपत्तेः। अतो विशेष्य-विशेषणभावसापेक्षाणां पदार्थसम्बन्धानामेवापूर्वत्वम्। तद्बोधकशब्दयोजनकारित्वादेव नव्यकवीनां नवीनत्वम्। अत एवाद्भुतरसाद्यभिव्यञ्जकवाक्यार्थस्याननुभूतत्वेनापूर्वत्वात्।

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

इत्यादीनामपूर्वार्थबोधजनकत्वेन प्रामाण्यम्।

कः शब्द इति प्रश्ने घट इति प्रतिवचनात् कोऽर्थ इति प्रश्ने घट इति प्रचिवचनाच्छब्दं श्रुत्वाऽर्थं शृणोमीति व्यवहारात् प्रत्यक्षविषयौषधविशेषोऽज्ञात इति व्यवह्रियते। वचेयमिति बोधितो ज्ञात इति व्यवह्रियते, तेन शब्दार्थयोस्तादात्म्यात् तादात्म्यस्य तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वरूपत्वात् पदस्यार्थसमव्याप्तत्वेन शब्देनार्थानुमितेरेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीति न्यायेन स्मृतेश्च। घटमानयेति वाक्यघटकपदार्थाः परस्परसंसर्गवन्तः, आकाङ्क्षादि-मत्पदानुमितत्वात्, आकाङ्क्षादिमत्पदस्मारितत्वाच्च। एते पदार्था अभेदवृत्तित्वस्वरूपादिसंसर्ग-वन्तः। एतदतिरिक्तसंसर्गाभाववत्वे सति संसर्गवत्त्वादित्याद्यनुमानेऽन्तर्भावात् किमतिरिक्तशब्द-प्रमाणस्वीकारेण ? तन्न, घटवद्भूतलमिति प्रत्यक्षात्मकनिश्चयसत्त्वेऽनुमितिर्न भवति, शाब्दबोधस्तूप-जायते। तेन शाब्दप्रत्ययस्य नानुमितित्वमिति पदार्थज्ञानस्य पदजन्यस्याप्यनुमितित्वाभावेन, अथ च घटानुभवजन्यसंस्कारेण तत्स्मृतौ ज्ञातोऽयं घट इति वर्तमानध्वंसप्रतियोग्यनुभवविषयता भासते। घटपदजन्यपदार्थज्ञाने 'ज्ञातोऽयं घटः' इत्यनुभूतता न भासत इति पदजन्यपदार्थ-प्रत्ययस्य स्मृतित्वाभावेन चोक्तसंसर्गानुमाने पक्षे हेतोरभावात् स्वरूपासिद्धिरिति नोक्तानुमाने शब्दप्रमाणान्तर्भावः।

यद्युच्यते तत्तानुभूतताऽनुल्लेखेऽपि लाघवात् स्मृतित्वमङ्गीक्रियते। वाक्यजन्यज्ञानस्य पदजन्यपदार्थस्मृतेः प्राग्वाक्यार्थस्याशंस्योद्बोधकत्वाभावेन न स्मृतित्वापत्तिः। अत एव वाक्यार्थस्य वाक्यार्थबोधात् पूर्वं स्मृतिविषयत्वाभावेनापूर्वत्वम्। तत्त्वनादेयम्, शब्दजन्यबोधानन्तरं शाब्दयामि शाब्दयामीत्यनुव्यवसायेन शाब्दत्वजातेः सिद्धया तदनुरोधेन तदवच्छिन्नबोधं प्रत्याकाङ्क्षायोग्यतादिज्ञानस्य कारणत्वकल्पनस्यावश्यकत्वे तत्रानुमितित्वस्वीकारे तदवच्छिन्नकार्यं प्रति व्याप्तिस्मृत्यादेरपि कारणत्वकल्पने गौरवम्। अपि च सिद्धौ सत्यां सिषाधयिषाविरहेऽनुमितेरभावेन शाब्दस्योदयेनानुमितिं प्रति सिषाधयिषाविरहविशिष्टसिद्धेः प्रतिबन्धकतायां प्रतिबध्यतावच्छेदके शाब्दत्वावच्छिन्नातिरिक्तत्वनिवेशे गौरवापातश्च। सिद्धेः क्षणिकत्वेन नाशोत्तरं शाब्दानुमितिरिति न वाच्यम्, तथा सत्यनिष्टाया अनुमितेरपि सिद्धिक्षणिकत्वस्वभावेनापत्तेः। सिद्ध्यभावमात्रस्य पक्षतात्वं तु न युक्तम्। यत्र पर्वतो वह्निव्याप्यधूमवान् वह्निमानिति सिद्धिसत्त्वे तदुत्तरक्षणेऽनुमित्सायामिष्टाया अनुमितेरनुत्पत्तेः, सिद्ध्यभावस्याभावात्। सिषाधयिषाविरहविशेषणे सिद्धिसत्त्वे विशेष्यसिद्धिसत्त्वेऽपि विशेषणस्य सिषाधयिषाविरहरूपस्याभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावेन पक्षतासत्त्वादनुमितिसिद्धिरिति प्रतिबध्यतावच्छेदककोटौ शाब्दत्वावच्छिन्नातिरिक्तत्वनिवेशप्रयुक्तगौरवस्य दाढर्येनानुमानप्रमाणे शब्दप्रमाणान्तर्भावशङ्कावकाशो न।

प्रमाणशब्द आप्तशब्दः, आप्तो नाम वस्तुतत्त्वस्य कात्स्न्र्येन निश्चयवान्, रागादिवशादपि नान्यथावादी। शब्दे आप्तत्वञ्च निरुक्ताप्तोक्तत्वमनाप्तानुक्तत्वं वा। अनाप्तो भ्रमप्रमादविप्रलिप्साकरणापाटवदोषान्वितः। तार्किकमते आप्तोक्तत्वमाप्तशब्दे आप्तत्वम्, तन्मते वेदस्य पौरुषेयत्वात्। पौरुषेयत्वञ्च पुरुषकर्तृकोच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वम्। अपौरुषेयत्वञ्च पुरुषकर्तृकोच्चारणसजातीयोच्चारणसापेक्षोच्चारणविषयत्वम्। मीमांसकमते शब्दे आप्तत्वमनाप्तानुक्तत्वम्, तन्मते वेदस्यापौरुषेयत्वात्।

वस्तुतस्तु—अनाप्तानुक्तत्वमाप्तत्वं शब्दे तार्किकमीमांसकसाधारणम्। तच्च तार्किकमते आप्तोक्तत्वेनानाप्तानुक्तत्वम्, मीमांसकमतेऽनुक्तत्वेन शब्दे आप्तत्वम्। यद्यपि वेदः पौरुषेयः, वाक्यत्वात्, रघुवंशादिवदित्यनुमानेन पौरुषेयत्वं वेदे तार्किकैः साध्यते, तन्न समीचीनम्, न हि पञ्चम्यन्तपदप्रयोगेणानुमानं भवितुमर्हति, तथा सति नरशिरः कपालं शुचिप्राण्यङ्गत्वाच्छङ्खवत्। गोमयं मधुरम्, गव्यत्वात् पयोवदित्यनयारप्यनुमानत्वापत्तिः स्यात्। अतोऽलभ्यलाभविषयकः क्षेमविषयकश्च हेतुहेतुमत्प्रयोगोऽनुमानप्रयोजको भवतु। यथा—अलभ्यलाभप्रयोजको हेतुर्देहयोगप्रयोजकम्, मातृपितृसंयोगोऽदृष्टञ्च। देहक्षेमप्रयोजकमन्नाद्यौषधम्। अनुमाने हेतुसत्ता साध्यसत्ताधीनापेक्षते। यथा—वह्निमान् धूमादित्यत्र धूमसत्ता वह्निसत्ताधीना प्रकृते वाक्यत्वं नाम आकाङ्क्षायोग्यताऽऽसत्तिसन्निधिमत्पदकदम्बत्वम्। पौरुषेयत्वं नाम पुरुषकर्तृकोच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वम्। न हि तत्सत्ताधीनाऽऽकाङ्क्षादिमत्पदकदम्बसत्ता। आकाङ्क्षादिमत्पदकदम्बत्वपौरुषेयत्वयोर्व्याप्यव्यापकभावो न सम्भवति। अत्र पौरुषेयत्वाभावोऽर्थात् पुरुषकर्तृकोच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वाभावः, तत्र आकाङ्क्षादिमत्पदकदम्बत्वाभाव इति वक्तुं न शक्यते। अध्यापकेन बालानध्याप्यमाने रघुवंशकाव्ये बालकर्तृकोच्चारणसजातीयाध्यापककर्तृकोच्चारणसापेक्षोच्चारणविषयत्वस्य पौरुषेयत्वाभावस्य काव्ये सत्त्वेऽप्याकाङ्क्षादिमत्पदकदम्बत्वाभावस्यासत्त्वात्।

एतदुक्तं भवति—उच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वसत्त्वमाकाङ्क्षादिमत्पदकदम्बसत्त्वे न हेतुः, बालमध्याप्यमाने रघुवंशकाव्ये बालोच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वाभावेऽप्याकाङ्क्षादिमत्पदकदम्बत्वस्य सत्त्वादिति उच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वरूपपौरुषेयत्वसत्त्वप्रयुक्तत्वं वाक्ये नास्तीति वाक्यत्वहेतुना पौरुषेयत्वं वेदेऽसाध्यम्। इत्थमुच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वरूपपौरुषेयत्वस्य कारणस्याध्यापकैर्बालं पाठ्यमाने रघुवंशकाव्येऽभावे सति आकाङ्क्षादिमत्पदकदम्बत्वस्य सत्त्वेन व्यतिरेकव्यभिचाराद् घटं प्रति रासभवदुच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वस्य वाक्यत्वं प्रति कारणत्वाभावेन पौरुषेयत्वसत्ताप्रयोज्यवाक्यत्वसत्ताया अभावे सति वाक्यत्वस्य पौरुषेयत्वव्याप्यत्वाभावेन वाक्यत्वेन वेदे पौरुषेयत्वानुमितिर्न सम्भवेदिति वेदस्यापौरुषेयत्वे सिद्धे वेदस्योच्चारणसजातीयोच्चारणसापेक्षोच्चारणविषयत्वं सिद्धम्। तेनानादिसिद्धसजातीयोच्चारणसापेक्षोच्चारणविषयवेदवाक्यघटकलिङ्गादिनिष्ठशाब्दभावनारूपाप्ताभिप्रायविषयत्वेन **'सोमेन यजेत्'** इति श्रुतिघटकयजिप्रतिपाद्ययागे स्वर्गसाधनत्वेऽनुमितेऽनुमितेन स्वर्गसाधनत्वेन परम्परया स्वर्गकामस्य कर्तव्यतयाऽऽप्ताभिप्रायविषयत्वेन च स्वर्गकामस्य यागे प्रवृत्तिरुदेति।

आप्ताभिप्रायश्च कार्यस्य प्रवृत्तेर्भवनस्योत्पत्तेः कारणरूपा भावना। सा कार्यप्रवर्तकगुरौ समवायसम्बन्धेन वर्तते। वेदघटकलिङ्गादिपदेषु अभिधायकत्वसम्बन्धेन वर्तते। लिङ्गादिघटितवाक्येषु स्वाभिधायकलिङ्गादिपदघटितत्वसम्बन्धेन वर्तते। लिङ्गादिघटितवाक्योच्चारणकर्तरि उपदेष्टरि स्वाभिधायकलिङ्गादिपदघटितवाक्योच्चारणकर्तृत्वसम्बन्धेन वर्तत इति व्यवस्था। तत्राप्ताभिप्रायरूपभावनाविषयत्वं त्रिविधं व्यवह्रियमाणमनुभूयते। तच्च प्रभुशक्तिसमृद्धराजाज्ञाघटकलिङ्गादिवाच्यभावनाविषयत्वरूपमिष्टसाधनत्वानिष्टसाधनत्वविषयकप्रमावत्पुरुषोच्चरितलिङ्गादिप्रतिपाद्यभावनाविषयत्वरूपम्, अनादिसिद्धसजातीयोच्चारणसापेक्षोच्चारणविषयवेदवाक्यघटकलिङ्गादिनिष्ठभावनाविषयत्वञ्चेति त्रिविधम्। तत्र प्रभुशक्तिसमृद्धराजाज्ञासम्बन्धिभावनाविषयत्वहेतुना कर्तव्यकर्मणीष्टसाधनत्वेऽनुमित्सितेऽनुमित्सुना प्रवर्तकस्य हेतुतावच्छेदकतया प्रविष्टप्रभुशक्तिज्ञानं कर्तव्यम्। प्रभुशक्तिज्ञानाभावे केवलराजाज्ञाविषयत्वेनेष्टसाधनत्वानुमितौ तु प्रवृत्तिर्निष्फला सम्भवेत्। तथेष्टसाधनत्वानिष्टसाधनत्वविषयकप्रमावत्पुरुषोच्चरितलिङ्गादिप्रतिपाद्यशाब्दभावनाविषयत्वेनेष्टसाधनत्वस्यानुमित्सायां हेतुतावच्छेदकप्रविष्टेष्टसाधनत्वानिष्टसाधनत्वज्ञानमनुमित्सुना विधेयम्। हेतुतावच्छेदिकायाः प्रमायाः प्रवर्तकेऽज्ञाने सति केवलपुरुषाभिप्रायविषयत्वेनेष्टसाधनत्वेऽनुमिते विधेयकर्मणि प्रवृत्तिस्तथा निष्फला स्यात्, अत एव बुद्धाभिप्रायविषयत्वेनेष्टसाधनत्वानुमित्या प्रवृत्तिर्निष्फला।

यथा ईसामसीहपुरुषाभिप्रायविषयत्वेनेष्टसाधनत्वानुमितौ प्रवृत्तिर्निष्फला, तथा मुहम्मदजनाभिप्रायविषयत्वेनानुमितेष्टसाधनत्वप्रयुक्तप्रवृत्तौ निष्फलत्वमवधेयम्। वस्तुतोऽनादिसिद्धोच्चारणसजातीयोच्चारणसापेक्षोच्चारणविषयवेदवाक्यघटकलिङ्गादिनिष्ठाप्ताभिप्रायरूपभावनाविषयत्वेनानुमितादिष्टसाधनत्वाज्ज्योतिष्टोमसोमवाजपेयादिषु प्रवृत्तिस्सफलेति तर्ककर्कशविचारचातुरीसमलङ्कृता विभावयन्तु। अत एव कुमारिलभट्टाचार्यैः—'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्, वेदाध्ययनसामान्यादधुनाध्ययनं यथा' इत्यत्राकूतम्।

अथ **'सोमेन यजेत'** इत्यत्र लिङ्वाच्यमिष्टसाधनत्वम्, तच्च बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वविशिष्टं लिङर्थः—नव्यनैयायिका इति वदन्ति । प्राचीननैयायिका मीमांसकाश्चाप्ताभिप्रायो लिङाद्यर्थ इति ब्रुवते ।

अत्रेदं वक्तव्यम्—**'अनन्यलभ्यश्शब्दार्थः'** इति न्यायेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्यानुमानप्रमाणलभ्यत्वेनानन्यलब्धत्वात् तस्य न लिङर्थत्वम्, अनुमानलिङ्गञ्चाप्ताभिप्रायविषयत्वम्, यदुदयनाचार्याणां प्राचीननैयायिकानां लिङर्थत्वेनाभिमतम् । अनुमानप्रयोगश्च सोमयागः स्वर्गरूपेष्टसाधनत्ववान् लिङ्निष्ठाप्ताभिप्रायरूपभावनाविषयत्वाद् यत्र यदीयाप्ताभिप्रायविषयत्वं तत्तदीयेष्टसाधनत्ववत् । यथा बालकमुद्दिश्य प्रयुक्ते बालः, वेदं पठ इति गुर्वाप्ताभिप्रायविषयत्वेन वेदपठने बालीयेष्टसाधनत्वमनुमाय बालो वेदाध्ययने प्रवर्तते । इष्टसाधनत्वेनाप्ताभिप्रायविषयत्वस्यानुमातुमशक्यत्वात् । आप्ताभिप्रायविषयत्वाभाववति अभक्ष्यभक्षणालेह्यलेहनाचोष्यचोषणादौ प्रिये इष्टसाधनत्वस्य सत्त्वेन इष्टसाधनत्वस्योक्तसाध्याभाववद् वृत्तित्वाद् व्यभिचारप्रसङ्गेन तादृशानुमितेरनुदयात् । अतो नाप्ताभिप्रायविषयत्वस्यान्यप्रमाणलभ्यत्वमित्याप्ताभिप्रायविषयत्वस्यानन्यलब्धत्वेन लिङाद्यर्थत्वे दृढे स्वाध्यायोऽध्येतव्य इत्याप्ताभिप्रायविषयत्वरूपभावनाविषयत्वेनेष्टसाधनत्वे स्वाध्यायाध्ययनेऽनुमिते तत्राधिकारिप्रवृत्तिः फलवती भवति । तथा लिङर्थत्वज्ञानमन्तरा केवलेष्टसाधनत्वज्ञानेन तत्तदध्ययनज्ञानेनाध्ययनप्रवृत्तौ साफल्यं न सम्भवेत् । शास्त्रप्रमाणसिद्धज्ञानैश्वर्यशक्तिवैराग्यबलसम्पन्नत्वेन वर्ण्यमाना मन्वादयः, **'सोमेन यजेत स्वर्गकामः'** इत्यादिविधिवाक्येषु तद्घटकयज्पदवाच्ययागेषु अनादिवेदसम्बन्ध्याप्ताभिप्रायरूपभावनाविषयत्वेनेष्टसाधनत्वमनुमितवन्तस्तत्र प्रवृत्तिरेव न हि स्वशिष्यानिष्टसाधनत्वानिष्टसाधनत्वविषयकप्रभावतत्पुरुषरूपाप्ताभिप्रायविषयत्वेन यागेषु इष्टसाधनत्वानुमितिं बोधयाञ्चक्रुः । तस्मादाप्ताभिप्रायरूपभावना स्वज्ञानजन्येष्टसाधनत्वानुमितिजन्यत्वसम्बन्धेन तद्विषयकप्रवृत्तौ वर्तते । अतो लिङादिनिष्ठभावनाविषयत्ववती निरुक्तसम्बन्धेन यागविषयकप्रवृत्तिर्बोध्या ।

अत्र केचिद् वदन्ति—प्रत्यक्षं नेन्द्रियार्थसन्निकर्षोत्पन्नज्ञानरूपम्, अपि तु ज्ञानाकरणकज्ञानत्वरूपम् । उक्तप्रत्यक्षलक्षणस्वीकारे ईश्वरसमवेतप्रत्यक्षेऽव्याप्तिस्स्यात् । एवं सति योगजधर्मेण यदृषीणां प्रत्यक्षं स्वर्गापूर्वदेवताविषयकं पृथिव्यादिस्थूलसूक्ष्मविषयकञ्च भूतभविष्यविषयकञ्च विद्यते स्वर्गापूर्वदेवतापरमाण्वादीनामनृषिजीवप्रत्यक्षाविषयत्वेऽपि प्रत्यक्षविषयत्वन्नास्तीति वक्तुं न शक्यते । कस्यचित् प्रत्यक्षविषयत्वस्य सत्त्वे उक्तसामान्याभावोऽशकवचनः । अत एव जन्तुविशेषप्रत्यक्षाविषयत्वेऽपरजन्तुविशेषप्रत्यक्षविषयत्वे सति तस्य वस्तुनः प्रत्यक्षाविषयत्वं नोच्यते । आर्षप्रत्यक्षं प्रत्यक्षरूपं नास्ति, मदीयप्रत्यक्षस्य तस्य तत्राभावात् । तदा स्वकीयप्रत्यक्षेऽप्यपरप्रत्यक्षत्वाभावे सति स्वप्रत्यक्षमप्याशङ्काविषयतामाश्रयेत । अनुभूयते च जन्तुषु प्रत्यक्षशक्तिवैलक्षण्यम्, जलगतसूक्ष्मवस्तुनो मामकीनप्रत्यक्षविषयत्वाभावेऽपि जलचरयादोगणप्रत्यक्षविषयत्वस्यानुभवसिद्धत्वात् । इत्थं स्वर्गापूर्वदेवतादीनामस्मदाद्यतीन्द्रियाणामप्यार्षप्रत्यक्षविषयत्वस्य सत्त्वेन तत्रापि प्रत्यक्षप्रमाणस्यैव शास्त्रीयार्थप्रमाजनकत्वात्, किं शब्दप्रमाणाङ्गीकारेण ऋषीणामपि यदतीतानागतज्ञानं स्वर्गापूर्वदेवतादिज्ञानञ्च प्रत्यक्षं रूपम्, तदपि शास्त्रप्रमाणेनावगताप्ताभिप्रायविषयत्वेनेष्टसाधनत्वेऽनुमिते यागतपश्चर्यादिप्रवृत्तौ तादृशप्रत्यक्षप्रयोजकार्षशक्त्युदये सति तथार्षप्रत्यक्षसम्भव इति आर्षप्रत्यक्षेऽपि शास्त्रस्यैव परम्परया स्वजन्यज्ञानद्वारा जनकत्वमिति नहि शब्दप्रमाणं क्षोदक्षमम् ।

यत्तु—भ्रमविप्रलिप्साप्रमादकरणापाटवपुरुषसम्बन्धविधुरवेदप्रमाणस्य भ्रमप्रयोजकदोषशून्यतया वेदप्रमाणेन प्रमाविषयीभूतोऽर्थो ब्रह्मैव । न हि विभिन्नरूपेण भासमानं पृथिव्यादि । तथा सति प्रत्यक्षानुमानप्रमाणयोर्येन रूपेण ज्ञानजनकत्वम्, तेन रूपेण पृथिव्यादिपदार्थानामसत्त्वादन्यरूपेण वर्तमानस्य पदार्थस्य तदवृत्तिविभिन्नरूपेण तद्विषयकभ्रमजनकत्वात् प्रमाजनकत्वाभावेन कथं प्रत्यक्षानुमानयोः प्रामाण्यं सम्भवेत् ? तदभाववति तत्प्रकारकज्ञानजनकस्य प्रमाणत्वाभावात् ।

तत्रोच्यते—प्रत्यक्षानुमानाभ्यामसिद्धेऽर्थे वैदिकैः शब्दस्य प्रामाण्यमङ्गीक्रियते । प्रत्यक्षानुमाने च स्वस्वविषये स्वतन्त्रप्रमाणे स्तः । न हि शब्दप्रमाणप्रत्यक्षानुमानप्रमाणानां परस्परं प्रतिबद्धयप्रतिबन्धकभावः । शब्दप्रमाणेन सिद्धान् स्वर्गापूर्वदेवतादीन् तदविषयकत्वेन प्रत्यक्षानुमानेनापलपितुं शक्नुतः । प्रत्यक्षानुमानाभ्यां सिद्धान् तत्तद्रूपावच्छिन्नपृथिव्यादीन् तत्तद्रूपावच्छिन्नाविषयकत्वेन शब्दप्रमाणं नापलपितुं शक्नुयादित्येवं मीमांसामांसलितस्वान्तानां निर्मत्सराणामुपासितगुरुवृद्धानां सतां पूर्वाचार्याणां साधीयसी मीमांसा ।



# अद्वैतब्रह्मविवेचनम्

श्रीमहादेव उपाध्यायः

सम्मानितप्राध्यापकः—सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

ब्रह्मविषये सन्ति नानाविधा विप्रतिपत्तयः। तथाहि—तत्र ब्रह्माऽद्वैतवादिनो वेदान्तिन इत्थं समुद्गिरन्ति—

**यद्वाचाऽनभ्युदितं येन वागभ्युद्यते।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥** (केनोप० ४–म०)

इत्यनेनाऽद्वैतमवाङ्मनोगोचरं शुद्ध-बुद्ध-मुक्तस्वभावं परब्रह्मैव प्रतिपादितं भवति।

**"विद्यावतां भागवते परीक्षा"** इत्यभियुक्तोक्तेर्भगवतरहस्यवेत्तारो भागवतीया विद्वांस इत्थं खलु ब्रह्मणः स्वरूपं प्रतिपादयन्ति—

**वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥** (भागवते–१।२।११)

मध्वमते विष्णुरेव परब्रह्म, स चैक एव सच्चिदानन्दविग्रहः, गुणपरिपूर्णः, परमार्थतो जगदादिकारणम्, सर्वान्तिर्यामी, स्वतन्त्रः स इति विज्ञेयम्।

रामानुजीयाः खलु शेषशेषिभावाङ्गीकारेण तत्र विशेषं ब्रुवन्ति। तत्र परमात्मा ब्रह्मपदाभिधेयः शेषी। 'जीव'शब्दवाच्याः खलु जीवात्मानः परमात्मशरीररूपत्वाच्छेषा उच्यन्ते।

एवंरूपेणान्या अपि बह्व्यः सन्ति विप्रतिपत्तयस्ताश्च समयाभावात् लेखविस्तरभयाच्च नेदानीं प्रदर्श्यन्ते।

अत्राद्वैतब्रह्मविषये श्रीमधुसूदनसरस्वतीमहाभागैः स्वयं स्वविरचिते 'सिद्धान्तबिन्दु'-नामके ग्रन्थे द्वैतजन्यभेद-भेदजन्यद्वैतनिरसनपुरःसरं केवलमद्वैतमेव ब्रह्म विनिरूपितम्। तथाहि—

**न चैकं तदन्यद् द्वितीयं कुतः स्यात्।**
**न वा केवलत्वं न चाकेवलत्वम्॥**
**न शून्यं न चाशून्यमद्वैतकत्वात्।**
**कथं सर्ववेदान्तसिद्धं ब्रवीमि॥** (श्लोकः १०)

अयमेव श्रीशङ्कराचार्यस्वीकृतोऽद्वैतसिद्धान्तः श्रुतियुक्तिभ्यां द्वाभ्यामेव पुष्टीकृतो वर्तते, इत्यत्र नास्ति लेशतोऽपि विवादः।

**अद्वैतविचारः**

द्विधा इतं द्वैतं तस्य भावो द्वैतम्, तथा चोक्तम्—

**"द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते।"**

न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमिति त्वक्षरार्थः। उक्तमपि—**"सलिल एको द्रष्टाऽद्वैतः"** इति श्रुतेः। तथा चाद्वैतागमस्य पुरतोऽर्थापत्तिरूपं प्रमाणं परान् विरोधिनो हि प्रमाणा-

भासान् निराकुर्वन्तीयमर्थापत्तिपरम्परा सेवामेव = आनुकूल्यमेव, अर्जयति = भजते। तथा चोक्तम्—

**अद्वैतागमनाम्नोरे साधु सा धुन्वती परान्।**
**सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा** ॥ (खण्डनखण्डखाद्ये)

इयञ्चार्थापत्तिः श्रुतीनां प्रामाण्यमाश्रिता स्वयञ्चापि प्रमाणभूता प्रत्यक्षादिप्रमाणैरबाध्यमाना सती ब्रह्मातिरिक्तस्यावस्तुनो निराकरणं विदधती केवलमद्वैतस्य ब्रह्मणो वस्तुभूतस्य साधिका भवतीति दृष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते। तथा चोक्तं श्रीहर्षेण महाकविना—

**अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।**
**पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका** ॥ (ख० ख० खा०)

इत्थञ्चाद्वैतवेदान्तिनः श्रुतेरेव सर्वतो बलवत्तां प्रतिपादयन्ति। यतः श्रुतेर्बलवतः कस्यापि प्रमाणस्याभावादनङ्गीकाराच्च। स्वयं ज्योतिष्ट्वश्रुतिमूलकत्वादर्थापत्तेः श्रुतिबलमाश्रित्य प्रत्यक्षादिप्रमाणबाधकत्वेन, प्रत्यक्षादिप्रमाणबलमाश्रित्य भासमानद्वैतभेदादिप्रपञ्चबाधकत्वं सूपपद्यते। यत इन्द्रियसन्निकर्षाद्याश्रयत्वदर्शनमात्राधीनप्रवृत्तिकतर्काधीनजायमानायां भासमानायां वा विपर्ययानुमितौ चाप्रामाण्यग्रहमाधत्ते इति तु परमार्थः। अत एव व्यावहारिकत्वेनोपपद्यमानभेदविषयकप्रत्यक्षादेरन्यथानुपपद्यमानाभेदविषयकश्रुत्याबाधः। अभेदस्य, अद्वैतस्य च व्यावहारिकत्वं प्रातिभासिकत्वं वा भेदवत्तात्त्विकदृष्ट्या नहि व्याहर्तुं शक्यते, अपि तु भेदस्य द्वैतमूलकस्य, द्वैतस्य वा भेदमूलकस्यैव तथात्वं वक्तुं शक्यते। उक्तञ्च धर्मराजाध्वरीन्द्रेणापि—

**देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात्** ॥ (वे० परि०)

अपि चोक्तम्—

**रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी।**
**भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला** ॥
(योगशिखोपनि० ४।४।२)

**चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम।**
**आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत्** ॥
(आत्मप्रबोधोपनि० ३०)

अन्यच्चापि—

**घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः।**
**जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम्** ॥
(योगशिखोपनि० ४।१८)

**"ब्रह्मैवेदं विश्वमिदं वरिष्ठम्।"** (मुण्डकोप० २।२२१)

**"जगद्रूपतयाप्येतद् ब्रह्मैव प्रतिभासते।"** (आत्मोपनि० २)

**"आत्मैवेदं सर्वम् ।"** (छान्दोग्योप० ७।२५।२)
**"ब्रह्मैवेदं सर्वम् ।"** (बृहदारण्यकोप० २।५।१)
**"सच्चिदानन्दरूपमिदं सर्वम् ।"** (नृसिंहोत्तरतापनीयोपनि० ७)

अस्यैवाद्वैतब्रह्मणः रसस्वरूपताऽपि प्रतिपादिता भवति स्वयंप्रमाणभूताभिः श्रुतिभिः । तद् यथा—

**"रसो वै सः"** (तैत्तिरीयोप० ६।४५) ।
**"रसो वै मधुः"** (श्रुति) ।
**"सर्वगन्धः सर्वरसः"** (छान्दोग्योप० ३।१४।२) ।

सर्वेषां द्रष्टा, सर्वप्रकाशकः, सूर्यचन्द्रादिज्योतिषां ज्योतिर्भूतः, परमचैतन्यज्योतिःस्वरूपः, सर्वसुखानां सुखस्वरूपः, सर्वेषामेव माधुर्याणां माधुर्यभूतः, सर्वसाराणां सारभूतः, सर्वेषामेव रसानां रसस्वरूप आत्मा, स एवाऽस्ति योऽस्ति अद्वैतब्रह्मपदाभिधेयः ।

**"सर्वस्य द्रष्टा"** (नृसिंहोत्तरतापनीयोप० २) ।
**"ज्योतिषां ज्योतिः"** (त्रिपादविभूतिमहानारायणोप० ४।१) ।

अपि च—**"आत्मा ब्रह्मैव भवति सद्रूपत्वाच्चिद्रूपत्वादानन्दरूपत्वादविक्रियत्वादसंगत्वात् परिपूर्णत्वाच्चेति"** । श्रुतिरपि तावदद्वैतब्रह्मणः सर्वथा संसर्गानवच्छिन्नत्वं प्रतिपादयति । संसर्गानवच्छिन्नत्वेऽपि बाह्याभ्यन्तरसर्वदेशावच्छेदेन सर्वकालावच्छेदेन न समस्तमपि चराचरात्मकं जगद् व्याप्तं विधाय सन्तिष्ठतेऽद्वैतं ब्रह्मेति नूनं विभाव्यताम् ।

यथा पृथ्वी घटाकाराकारिता सती भासमाना भवति, यथा वा पटकारणीभूतास्तन्तवः पटाकाराकारेण भासमाना भवन्ति, तथैव सच्चिदानन्देति स्वरूपलक्षणलक्षितं खलु अद्वैतं ब्रह्म जगदाकारेणावभासमानं भवति, स्वातन्त्र्येण जगतः कापि स्थितिरेव नास्तीति साधूक्तं तपोमूर्तिना । तथा हि—

**यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम् ।**
**यथा नास्ति नभोवृक्षस्तथा नास्ति जगत्स्थितिः ॥**
(योगशिखोप० ४।१८) ।

अपि च—**"अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्न हि ।"** (तेजोबिन्दूपनि०) ।

**"ब्रह्मादिस्तम्बपर्यन्तं मृषा मात्रा उपाधयः ।"** (अध्यात्मोप० १८) ।
**"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।"** (श्रुतिः) ।

अपि च—

**"एकमेवाऽद्वयं ब्रह्म नेह नानास्ति किञ्चन ।"** (अध्यात्मोपनि० ६३)

विश्वविवर्त्ताधिष्ठानभूतं ब्रह्मैव केवलमज्ञानवशाद् रज्जुसर्पवद् जगदाकारेण भासमानं भवतीत्यतो जगज्जीवेश्वरादीनामेकस्माद् अद्वितीयब्रह्मणोऽतिरिक्तं किमप्यस्तित्वमेव नास्ति । केवलं सच्चिदानन्दस्वरूपं परमार्थभूतं सत्यात्मकं परं ब्रह्मैव वस्तु सन्तिष्ठते ।

**"यत्स्यात् सर्वत्र सर्वदा ।"** (चतुःश्लोकीभाग०)

अर्थाद् यद् वस्तुभूतं सत् सर्वेषु कालेषु विद्यमानं भवेत्, कदापि न बाध्येत, सर्वत्र स्वस्थितिसम्पन्नं भवेत्, तदेव त्रिकालाबाधितं सर्वानुगतं सत्यभूतं वस्तु अद्वैतं ब्रह्मेत्युच्यते। तदेव च विषयोपाध्यनवच्छिन्नम्, विशुद्धम्, निर्विषयम्, निर्विशेषम्, निराकारम्, निर्विकारम्, प्रपञ्च-शून्यम्, शाश्वतम्, आनन्दस्वरूपं शिवतत्त्वात्मकम्, नित्यं ज्ञानस्वरूपञ्चेति कथ्यते।

तथा चोक्तं बृहदारण्यके—**"अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः"**—(बृहदारण्यकोपनि०—९)

छान्दोग्योपनिषदि जायमानेन प्रजापतेरिन्द्रस्य वा संवादेनेदं सुस्पष्टं भवति यदयमात्मा न शरीरस्वरूपः, यतः शरीरस्य ध्वंसप्रतियोगित्वात् प्रागभावप्रतियोगित्वाच्च भवत्यनित्यत्वम्, सांसारिकसुखदुःखादिसंसर्गवत्त्वाच्च सांसर्गिकत्वञ्च सिद्धयति।

तात्त्विकदृष्ट्या विचार्यमाणेऽयमात्मा ब्रह्म विशुद्धविज्ञानस्वरूपः। अयमेव च ब्रह्मभूत आत्मा विषयविषयिणोरनुस्यूतः संस्तदुभयरूपेण प्रतीयते। माण्डूक्येऽप्यस्य मतस्येत्थं पुष्टिः कृता—यदयमात्मा व्यष्टेर्जाग्रत्-स्वप्नसुषुप्तिस्वरूपाऽवस्थात्रयस्य, तथा समष्टेर्विश्वतैजस-प्राज्ञस्वरूपस्या-वस्थात्रयस्य द्रष्टा वर्तते।

एतावांश्चास्ति विशेषो यदेतन्निरूपितदृष्टत्वसत्त्वेऽपि सर्वथा चास्ति एतेभ्योऽतीतः परो भिन्नश्च। अस्य प्रत्यगेकरसस्वरूपस्य ब्रह्मभूतस्याऽऽत्मनः पुरस्तात् सर्वेऽपि रसा आनन्दाश्च क्रमशो रसाभासस्वरूपा आनन्दाभासभूताश्च भवन्ति।

अनेनैव ब्रह्मभूतेनात्मना चराचरात्मकमिदं सर्वमपि जगदावृतं सत् सन्तिष्ठते, अस्यैव च जगदात्मस्वरूपस्य ब्रह्मभूतस्यात्मनो विद्याकृतविवर्तोऽयं नानात्वेन प्रतिभासमानो द्वैतस्वरूपो भवभूतोऽयं संसार इति कृतं पल्लवितेन।



# मीमांसादर्शनदृष्ट्या कर्मस्वरूपसमीक्षा

डॉ० रामेश्वरप्रसादत्रिपाठी

दर्शनशास्त्रविभागाध्यक्षः, नेशनल डिग्री कालेज बड़हलगंज, गोरखपुर ।

भारतीयदर्शनेषु मीमांसादर्शनस्य तथाविधशास्त्रस्य वा स्थितिरन्यदर्शनापेक्षया विजातीयेव दृश्यते । यद्यपि षड्दर्शनेष्वस्य दर्शनस्य महत्त्वमत्यन्तमेव गीयमानमुच्चकोटिकञ्च पश्यामः । अस्य दर्शनस्य सूत्राणां संख्याऽपि चतुश्चत्वारिंशदधिकषड्विंशतिशतकं वर्तते । एवमस्मिन् दर्शने वैदिककर्मकाण्डीयसमस्यानां शङ्कानाञ्च समाधानं विशेषतो विलोक्यते । यासां समस्यानामुपादेयता कतिपयसम्प्रदायानुयायिनां दृष्टौ सर्वाधिका चास्तीति निर्णीयते । युञ्जानयोगजसमाधिमाकलय्य त्रिकालदर्शित्वसम्पन्नो महर्षिर्भरद्वाजो वर्षसहस्रं ब्रह्मचर्यमधिवसन्नपि नास्य दर्शनस्योद्भवस्थानभूतं वेदमियत्तया परिच्छेत्तुमशकन् ।

स चायं भगवता बादरायणेन ऋग्यजुःसामाथर्वशाखोपशाखाभेदपुरस्सरं कर्मकाण्डोपासनाकाण्डज्ञानकाण्डभेदेनापि विभाजितो वेदः । आत्यन्तिकैकान्तिकरूपतामापन्नत्रैविध्यावच्छिन्नबन्धस्वरूपदुःखविलयोऽपि, अर्थज्ञानपूर्वकाध्ययनपरिगृहीतस्याध्यापनमात्राधीन एवास्तीत्यपि न तिरोहितमस्ति केनापि शास्त्रं विदाङ्कुर्वता विदुषा । तदर्थविषयकज्ञानसम्पादनायैव परमकरुणावरुणालयो भगवान् जैमिनिः **"अथातो धर्मजिज्ञासा"** इत्यादीनि **"अन्वाहार्यं च दर्शनात्"** इत्यन्तानि धर्मसूत्राणि प्रणिनाय ।

परन्तु तद्विरुद्धपक्षान्तरमाश्रित्य दर्शनान्तरकोविदाः कर्मकाण्डसमाधानात्मिका विशेषतामालोचयन्त एवास्य दर्शनस्य दर्शनत्वमपि नाङ्गीकुर्वते । तेषामिदं कथनमस्ति यदस्मिन् मीमांसादर्शने सृष्ट्यात्मानात्मपरमात्मकर्माकर्मप्रभृतिदार्शनिका विषया नाममात्रेणापि न विचारिताः, प्रत्युत तत्र यज्ञादिकर्मकाण्डसम्बन्धिन एवानात्मभूता विषयाः सर्वशक्त्या बुद्धया चालोचिताः । तेषामालोचनेनास्य दर्शनत्वं नैवोपपद्यते । अत्रोच्यते मनीषिभिर्मन्त्रब्राह्मणात्मकः समग्रो वेदो धर्माधर्मप्रतिपादनपर इत्यध्वरमीमांसकानां सिद्धान्तः ।

अतो वेदवाच्यार्थविचारपरं मीमांसाशास्त्रमपि धर्माधर्मसम्बन्धिनमेव विचारं प्रस्तौति । तथा चोक्तं महर्षिजैमिनिना—**"अथातो धर्मजिज्ञासा"** इति । अत्र धर्मशब्दोऽधर्मस्याप्युपलक्षकः, तस्यापि हानार्थं जिज्ञास्यमानत्वात् । एवं चास्य दर्शनत्वं सुष्ठु सम्पद्यते, सकलकल्याणसाधनीभूतधर्मादिविचारप्रस्तावकत्वात् । धर्मक्रियाणां सार्थकतायाः प्रामाणिकतायाश्च साधनभूतेऽस्मिन् दर्शने ईश्वरस्य जीवस्य कर्मणो मोक्षादेश्च चर्चा यत्र तत्र साधु श्रूयते । अत एव भाष्यकारप्रभृतयोऽत्र दर्शने दार्शनिकसिद्धान्तभूतानि तत्त्वानि विवेचयामासुः ।

प्राचीनकाले धर्मस्यैव प्रामाण्यमासीत् । वर्तमाने कालेऽपि च यागादिस्वरूपस्य धर्मस्य यादृशं स्वरूपं पश्यामस्तादृशं तद्रूपं वेदाद्यनुमोदितमेव । बौद्धधर्मोत्पत्तिस्तु पश्चात्कालीनैवास्ति । तथा चोक्तम्—

बौद्धादिनास्तिकैर्ध्वस्तो वेदमार्गः पुरा किल ।
महाचार्यः कुमाराख्यः स्थापयामास भूतले ॥[१]

लौगाक्षिभास्करेणाप्युक्तम्—

"को धर्मः, किञ्च तस्य लक्षणम् ?—इति चेदुच्यच्यते यागादिरेव धर्मः । तल्लक्षणम्—वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः[२] ।"

एतेन यागादेर्धर्मरूपता सिद्धयति । यथा घटो नास्तीत्यभावीयप्रतियोगितायाः किमस्य-वच्छेदकमिति प्रश्ने सति इदमेव तस्योत्तरं भवति यत्—प्रतियोगिताया अन्यूनवृत्तित्वे सति अनतिरिक्तवृत्तिर्यो धर्मः स एव प्रतियोगिताया अवच्छेदको भवति, यथा घटत्वमिति । तथैव धर्मस्य यागाद्यनतिरिक्तवृत्तित्वात् तद्रूपता सिद्धयति । आदिपदेन सत्कर्ममात्रानुष्ठानपरिग्रहो बोध्यः । तथा च धर्मस्य यागादिस्वरूपत्वाद् यागादेश्च कर्मरूपत्वाद् धर्मस्य कर्मरूपता सिद्धयति, तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात् ।

**धर्मस्वरूपे वादिनां विवादाः**

तत्तच्छास्त्रकारैर्भाष्यकारादिभिश्च धर्मस्य विभिन्नानि स्वरूपाणि प्रदर्शितानि । यथा—कुमारिलभट्टप्रभृतिभिर्मीमांसकैर्वेदप्रतिपाद्ययागादिकर्मस्वरूप एव धर्म इत्युक्तं प्राक् । सांख्यास्तावद् यागादिकर्मानुष्ठानजन्यामन्तःकरणवृत्तिमेव धर्मं ब्रुवते । यथोक्तमीश्वरकृष्णेनः—

अध्यवसायो बुद्धिधर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम् ॥

सौगतास्तु ज्ञानसम्बन्ध्यज्ञानजन्यां वासनां धर्ममाहुः[३] ।

जैनास्तु शरीरोत्पादकान् पुद्गलाख्यान् परमाणुपुञ्जानेव धर्मं वदन्ति ।

प्राभाकरास्तु विधिप्रत्ययमपूर्वाख्यं कार्यनियोगादृष्टादिपर्यायमेव धर्ममाहुः । उक्तञ्च—"अपूर्वकार्यं वेदवाक्यानामर्थः" इति ।

तार्किकास्तु वेदविहितकर्मजन्यमात्मविशेषगुणं धर्ममाहुः । यथोक्तम्—"धर्मः पुरुषगुणः"[४] इति ।

अन्यत्रापि—

"अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देन उक्तौ"[५] इत्यादिकं सर्वमप्यूह्यम् ।

**प्रागुक्तधर्मस्वरूपाणां प्रत्यादेशः**

एतानि सर्वाण्येव धर्मस्वरूपप्रतिपादकानि मतान्युक्तानीति भाट्टाः । तथा हि मीमांसकानां नये शब्दार्थनिर्णये लौकिकवैदिकप्रयोगा एव सन्ति प्रमाणभूताः । यथोक्तं भाष्यकारेण महर्षिणा शबरस्वामिना—

लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम् । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वेत्यादि[६] ।

---

१. सर्वदर्शनसंग्रहे । २. अर्थसंग्रहे । ३. धम्मपदप्रथमपरिच्छेदे ।
४. प्रशस्तपादभाष्ये, पृ० ६ । ५. वात्स्यायनभाष्ये, पृ० ४७ । ६. शाबरभाष्ये ।

पूर्वोक्तेष्वन्तःकरणवृत्त्यादिरूपधर्मस्वरूपेषु धर्मशब्दस्य लोके वेदे वा प्रयोगो नैव दृश्यते। तेषां धर्मस्वरूपत्वं नैव युक्तमिति। किञ्च, लौकिकपारलौकिकोभयविधेष्वभ्युदयेषु यस्य कस्यचिदभ्युदयस्य साधनं धर्म इति प्रचक्षते। यथोक्तं वार्त्तिककृता श्रीमता मीमांसापारदृश्वना कुमारिलभट्टेन—

**अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः।**
**पुद्गलेषु च पुण्येषु नृगुणे पूर्वजन्मनि॥**
**प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्।**
**पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः॥**[1] इति।

न चान्तःकरणवृत्त्यादौ धर्मशब्दप्रयोगाभ्युदयसाधनत्वयोरभावेऽप्यपूर्वे धर्मशब्दप्रयोगाभ्युदयसाधनत्वयोर्दर्शनेनापूर्वस्य धर्मत्वं स्यात्।

तथा हि धर्मस्य कीर्तनादिनाश्यत्वं यागादिस्वरूपे धर्मे नोपपादयितुं शक्यते, यतस्तेषां यागादिस्वरूपधर्माणां स्वयमेव क्षणिकत्वेन विनाशशालित्वात्, किन्त्वपूर्वस्वरूपे एव कीर्तनादिनाश्यत्वमुपपादयितुं शक्यते इति। तथा चोक्तम्—

**कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्।**
**गण्डकीबाहुतरणाद् धर्मः क्षरति कीर्तनात्॥**[2] इति।

अन्यदप्युक्तम्—

**"कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः।"**[3]

अर्थादसौ धर्मः कर्मनाशानद्या जलस्पर्शादिना नाशं गच्छति। आदिपदेन पूर्वोक्ताः करतोयाविलङ्घनादयोऽप्यर्था ग्राह्याः। एवं यागेन—यागात्मकेन कर्मणा धर्मात्मकमपूर्वं सम्पाद्य स्वर्गं भावयेदित्यादिना बहुभिर्भाष्यकारैश्श्रेयःसाधनत्वस्यापूर्वे प्रतिपादनेनाभ्युदयसाधनत्वमपि तस्य सूपपन्नमेव। तथा च धर्मशब्दप्रयोगाभ्युदयसाधनत्वयोरुभयोरप्यपूर्वे सत्त्वेन तस्य धर्मत्वं स्यादेवेति भावः। वेदे यागादेः श्रेयःसाधनत्वेन स्वर्गादेश्च तत्साध्यत्वेन प्रतिपादनादपूर्वस्य साध्यसाधनत्वोभयरूपत्वाभावेन यागादेः शक्तिमात्रत्वात् फलानामङ्कुरावस्थापन्नसूक्ष्मरूपत्वाद्। तथा च श्रूयते—

**"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"**[4] इति।

धर्मस्य कीर्तनादिनाश्यत्वस्थले च धर्मशब्दप्रयोगस्य गौणीवृत्तिविषयत्वेनापूर्वे धर्मस्वरूपासाधकत्वात्। शक्तिमात्रे च कर्मापरपर्यायभूतस्य धर्मशब्दस्य प्रयोगोऽपि नैव दरीदृश्यते।

किञ्च, क्षणिकानां श्रेयस्करकर्मापरपर्यायभूतानां यागादीनां स्वर्गादिसाधनत्वान्यथाऽनुपपत्त्याऽपूर्वः कल्प्यते, अतो विधिप्रत्ययवाच्यत्वमपि तस्यानुपपन्नमेव।

विधिप्रत्ययस्य शाब्दभावनारूपप्रवर्तनावाचकत्वात्, अतो पूर्वस्य धर्मत्वम्, तत्र धर्मपदव्यवहार्यत्वं वा व्याहर्तुं कर्तुं वा नैव शक्यते। अपि तु यागादिरूपकर्मण एव धर्मत्वं धर्मत्वकथनं वा समीचीनं प्रतिभाति। यथोक्तं वार्तिककारेण—

---

१. श्लोकवार्तिके—१९५–१९६। २. स्मृतौ—न्यायसिद्धान्तमुक्तावल्याम्।
३. न्या० सि० मु०। ४. उद्धृता श्रुतिः अर्थसंग्रहे।

न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥
श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।
प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥
तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादिरपूर्वं न ततः पृथक् ॥
शक्तयः सर्वभावानां भावशब्दैर्विशेषतः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥[1] इति ।

अनेनापूर्वे धर्मशब्दवाच्यता निराकृता । प्रमाणान्तरमुद्भावयता वार्त्तिककारेण य. -परपर्यायभूतस्य कर्मण एव तथात्वमुररीकृतम् ।

मीमांसादर्शनस्यापि मुख्यतयाऽऽधारभूतोऽयमेवास्ति कर्मसिद्धान्तः । यथा च कर्मेति मीमांसका इत्युल्लेखोऽपि सुस्पष्ट एव । तस्यैव विशेषतो विवेचनं विश्लेषणञ्चास्मिन् मीमांसाशास्त्रे वा सुचारुरूपतया व्यधायीत्यपि न तिरोहितमस्ति केषामपि विदुषाम् ।

कर्मशब्देन तेषामभिप्रायो वेदविहितयागादिसम्बन्धिकर्मकाण्डस्यानुष्ठानमेवास्ति । इमामेव प्रवृत्तिं पश्यन्नेको हि सर्वथा निरपेक्षो विद्वान् समस्तानामपि दर्शनानां सारभूतं तत्त्वं केवलं कर्मैवास्तीति प्रतिपादयति । अस्यामुक्तौ प्रामाण्यं व्यवस्थापयन् **'कर्मेति मीमांसकाः'** इमामेव प्राचीनाचार्यचरणोक्तिं प्रमाणत्वेनोपस्थापयति । निरपेक्षस्य विदुषोऽत्र विषये इदमेवास्ति कर्मनामकं तत्त्वम् । ईश्वरोऽपि कर्म विना जीवस्य कृते फलस्य सम्पादनं नैव विधातुं शक्नोतीत्यतः कर्मणो महत्त्वं सर्वथा सत्यमेवास्तीति मन्तव्यम् ।

अपि च संसारस्य सर्वप्राचीनो ग्रन्थ ऋग्वेद एवास्तीति सर्वेऽपि विदाङ्कुर्वन्ति भारतीयाः, तदतिरिक्ता वेतिहासवेत्तारः । तस्माद् ऋग्वेदादिदं ज्ञायते यद् यज्ञ एव भारतवासिनामस्ति सर्वोच्चतमः कर्मस्वरूपो धर्मः । स एव च ऋग्वेदो ग्रन्थो भारतीयस्यास्य यागादिकर्मभूतस्य धर्मस्यास्ति मूलभूतोऽप्याधारः । वैदिके धर्मविषये सर्वेषामुत्सवानां धार्मिकक्रियाणाञ्च सर्वासां सम्पादनं यज्ञादिशुभानि पवित्रतमानि च कर्माण्याश्रित्यैव सर्वदा भवन्ति स्म । तादृशे धर्मप्राणभूते वैदिके समये कस्यापि हिन्दुजातीयस्य जीवने जन्मत एवारभ्य मरणपर्यन्तं सर्वेऽपि संस्कारा यज्ञादिसत्कर्ममूलका एव दृष्टिगोचरीभूताः सन्तो दृश्यन्ते । इदानीन्तनकालावच्छेदेनापि सत्कार्यारम्भे कस्यापि कार्यस्य शुभारम्भे वा यज्ञादिपवित्रकर्मानुष्ठानमवश्यं पश्यामः ।

भगवद्गीताया अनुसारेण तु मानवस्य समस्तमपि जीवनं सर्वथा यज्ञादिपवित्रकर्ममयमेवास्ते । तथा चोक्तं भगवता श्रीकृष्णेन—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥[2]

अपि च— यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर[3] ॥

---

१. श्लोकवार्तिके—श्लोकसं० १९७।२०० चोदनासूत्रम् ।
२. श्रीमद्भगवद्गीता—३।१० । ३. श्रीमद्भगवद्गीता—३।९ ।

अपि च नैष्कर्म्यसिद्धये मिथ्याचारत्वनिवृत्तये शरीरयात्रासम्पत्तये वावश्यमेव यागादिकर्म सम्पादनीयम्। तथा—**"धर्मज्ञसमयः प्रमाणम्"** इति सूत्रोक्तप्रामाण्यं व्यवस्थापयतैव धर्मज्ञतमेन ब्रह्मणा समुदीरितः प्रामाणिकोऽयं यज्ञादिकर्मरूपः परमो धर्मोऽवश्यमेव विधेयो भगवतो विश्वनाथस्य श्रीविष्णोः श्रीरामचन्द्रस्यैवमन्येषामपीन्द्रादिदेवानाञ्च प्रीतये इत्यादि।

अयमाशयः—सृष्टिप्रारम्भकालावच्छेदेन प्रजापतिर्ब्रह्मा श्रुतिचोदितैर्यज्ञैः सह प्रजाः ब्राह्मणादिचतुरो वर्णान् समुत्पाद्य ताः प्रजाः प्रोवाच यद् यूयमवश्यमेवानेन यज्ञेन श्रौतेन स्मार्तेन च प्रसविष्यध्वम् = चरुपुरोडाशादिद्रव्यैर्देवानां प्रसन्नतां समुत्पादयध्वम्।

रुद्रादिदेवतानामुद्देशेन श्रद्धया भक्त्या च विहितो यागादिः कर्मविशेष इच्छाविषयीभूतान् विषयान् फलविशेषांश्च वितरतु, इष्टकामधुग् वा भवतु। तथा च कामनारहितानां ज्ञानप्रतिबन्धकदुरितक्षयाय भवतु, कामनासाहित्यसमन्वितानाञ्च स्वर्गसुखाय अन्यस्मै वा कस्मैचित् सुखविशेषाय जायतामिति[1]।

ननु **"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते"**[2] इत्यनेन कर्मणो बन्धहेतुत्वप्रतिपादनात् कथं बन्धकारणीभूतं कर्म कर्तुं शक्यत इत्याशङ्क्य निषेधति यत् कामनाविषयीभूतस्यैव काम्यकर्मणो बन्धहेतुत्वं स्वीक्रियते, न त्वीश्वरार्पणबुद्ध्या विधीयमानस्य निष्कामकर्मणोऽपीति। तदुक्तम्—**यज्ञार्थादित्यादि**।

**"यज्ञो वै विष्णुः"** इति श्रुतेर्यज्ञस्य कर्मणः श्रीविष्णोः परमेश्वरस्य प्रीत्यर्थं संतुष्टिनिमित्तं वा यत् कर्म क्रियते वेदविहितत्वात् तद् यज्ञार्थमिति प्रोच्यते। तस्माद् यज्ञार्थात् कर्मणो नित्यादीश्वरप्रसादहेतोरन्यत्र कामनाविषयीभूते कर्मणि, अयं लोकोऽधिकारी ब्राह्मणादिः कर्मबन्धनो भवति। शास्त्रविहितस्य कर्मणोऽकरणेनाथवा कामनाविषयीभूतेन निषिद्धेन वा विहितेन कर्मणा मानवो बन्धनग्रस्तो भवति, न त्वीश्वरप्रसन्नतायै कृतेन क्रियमाणेन वा कर्मणा[3]।

**"तत् कर्म यन्न बन्धाय भवति"** इति स्मरणादीश्वराराधनात्मकमेव कर्म बन्धनशून्यं भवति, तदतिरिक्तं तु सर्वमेव बन्धनकारणमिति भावः। अतः परमेश्वरप्रीत्यर्थमेव सर्वमपि कर्म कर्तव्यम्। तदपि मुक्तसङ्गः फलसंकल्परहितो भूत्वा शास्त्रविहितं कर्म सम्यक् समाचरेत्। तेन सन्तुष्टेश्वरप्रसादाच्छुद्धात्मा सन् ज्ञानं समवाप्य मुक्तो भवति मानव[4] इति शम्।

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥**

● ● ●

१. श्रीमद्भगवद्गीतायाः शङ्करानन्दीटीका, अ० ३, श्लो० १०।
२. ,, ,, ,, ३।९। ३. तत्रैव।
४. श्रीमद्भगवद्गीतायाः शङ्करानन्दी टीका—अ० ३, श्लो० ९।

# साङ्ख्यदर्शने प्रकृतितत्त्वसमीक्षा

श्रीरामदेवत्रिपाठी

व्याकरणविभागाध्यक्षः—मायागिरिसंस्कृतमहाविद्यालये

साङ्ख्यसूत्रे—"सत्त्वरजस्तमसां साम्यावस्थाप्रकृतिः[1]" इति प्रतिपादितमस्ति। अत्र सत्त्वरजस्तमांसि द्रव्याणि प्रकृतिस्वरूपाधायकानि विज्ञेयानि। तेषां संयोगविभागलघुत्व-गुरुत्वादिगुणवत्त्वस्य वक्ष्यमाणत्वात्। तेषां सत्त्वरजस्तमसां या अन्न्यूनातिरिक्ता च संहतावस्था अकार्यानुकूला सैव प्रकृतिरित्यर्थः।

वस्तुतस्तु—अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरिति लक्षणं योग्यम्।

अत्र लक्षणे या साम्यावस्था वर्त्तते, तस्या एव ग्रहणे वैषम्यावस्थायां प्रकृतिनाशापत्ति-र्भवति। अतः साम्यावस्थाऽत्रोपलक्षणरूपैवेति ज्ञेयम्। तदुक्तम्—"तेषां सत्त्वादिद्रव्याणां या साम्या-वस्था अन्न्यूनातिरिक्तावस्था न्यूनाधिकभावेनासंहतावस्थेति यावत्, अकार्यावस्थेति निष्कर्षः, अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः, यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात्।

**सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा।**

**एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्॥**

इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च[2]।

एतदेव सांख्यतत्त्वविवेचनेऽपि प्रपञ्चितं विशेषेण विदुषा। तद्यथा—"प्रकृतित्त्वं च साक्षात्परम्परयाऽखिलविकारोपादानत्वम्"। व्युत्पत्तिस्तु प्रकृष्टा परिणामरूपा आकृतिरस्या इति। सा साम्यावस्थोपलक्षितसत्त्वादिद्रव्यत्रयरूपा। साम्यावस्था च शान्तघोरमूढादिरूपाणामपि असमुदायवद्रूपत्त्वेऽप्यतिशयैः समुदायवद्भिरविरोधेन वर्त्तमानत्त्वं सामान्यात्मना गुणभावोऽति-शयात्मना प्राधान्यं विशेषात्मना वैषम्यमित्यतो न्यूनाधिकभावेनासंहतावस्थाऽकार्यावस्थेति यावत्[3]।

साङ्ख्यतत्त्वयाथार्थ्यदीपने चोक्तं यथा—"साम्यावस्थोपलक्षिता गुणाः प्रकृतिरित्येकं लक्षणं च। अकार्या गुणा इत्यपरम्"[4]। "सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि निरवयवमेकमेव साधारणमेतदव्यक्तमिति प्रकृतिलक्षणम्"[5] इति तत्त्वसमाससूत्रवृत्तौ निर्दिष्टमस्ति।

साङ्ख्यतत्त्वप्रदीपिकायां प्रकृतेः स्वरूपलक्षणं तटस्थलक्षणं च पृथक् पृथङ्निर्दिष्टमस्ति। तद्यथा—सत्त्वादित्रिगुणा नित्येति प्रकृतिस्वरूपलक्षणम्। तटस्थलक्षणं तु जगदुपादानकारणं प्रकृतिरिति[6]।

---

१. सा० सू०—१-१।
२. सा० प्र० भा० १।६१।
३. सा० त० वि० १ सू०।
४. सा० त० या० दी० १ सू०।
५. त० स० सू० वृ० १ सू०।
६. सा० त० प्र० ९०।

**प्रकृतेः पर्यायाः**

साङ्ख्यतत्त्वविवेचने प्रकृतेः पर्यायाः—अव्यक्तम्, प्रकृतिः, माया, प्रधानम्, ब्रह्म, कारणम्, अव्याकृतम्, तमः, पुष्पम्, क्षेत्रम्, अक्षरम्, बहुधात्मकम् इत्येते वर्णिताः सन्ति ।

तद्यथा—

अव्यक्तं प्रकृतिर्माया प्रधानं ब्रह्म कारणम् ।
अव्याकृतं तमः पुष्पं क्षेत्रमक्षरनामकम् ।
बहुधात्मकादिनामानि तस्यामी ते जगुर्बुधाः[१] ॥ इति ।

साङ्ख्यतत्त्वयाथार्थ्यदीपने—अव्यक्तम्, प्रधानम्, ब्रह्म, अक्षरम्, क्षेत्रम्, तमः, माया, ब्राह्मी, विद्या, अविद्या, प्रकृतिः, शक्तिः, अजा इत्येते प्रकृतेः पर्यायाः निरूपिताः सन्ति[२] ।

तत्त्वसमाससूत्रवृत्तौ च पर्यायाः प्रकृतेः निरूपिताः सन्ति । तद्यथा—अव्यक्तम्, प्रधानम्, ब्रह्म, परम्, ध्रुवम्, बहुधानकम्, अक्षरम्, क्षेत्रम्, तमः, प्रसूतमिति[३] ।

**प्रकृतिसिद्धिः**

साङ्ख्यदर्शने पदार्थानां ज्ञानाय त्रीण्येव प्रमाणानि सन्ति अभ्युपगतानि—प्रत्यक्षमनुमानमाप्तवचनं चेति । तत्र प्रत्यक्षम्—अतिदूरस्थातिनिकटस्थानाम्, सूक्ष्माणाम् । व्यवहितानाम्, अभिभूतानाम्, मिश्रितानां च ग्रहणेऽकल्पमित्यतः सर्वेषां पदार्थानां ज्ञाने साधकं न भवितुमर्हति । वस्तूनां प्रत्यक्षज्ञाने इन्द्रियाणामदुष्टत्वं मनस्संयोगश्च परमावश्यकः । प्रत्यक्षेणागृहीता विषया अनुमानागमाभ्यां गृह्यन्ते ।

पदार्थानामनुपलब्धिर्द्विधा भवितुमर्हति—पदार्थस्य सूक्ष्मत्वातिदूरस्थत्वादिजन्या, अभावजन्या च । तत्र सूक्ष्मताऽपि द्विविधा—स्वाभाविकी, अवस्थाभेदजा चेति । परमाणूनां सूक्ष्मता स्वाभाविकी । दूरावस्थानात् प्रतीयमाना अवयवविश्लेषजन्या वा सूक्ष्मता अवस्थाभेदजा । तत्र स्वभावतः सूक्ष्माणामतीन्द्रियाणाञ्चानुमानेन श्रुत्यादिरूपागमेनैवोपलब्धिः ।

साङ्ख्यमते सर्वस्य व्यक्तसमूहस्य महदादेर्हेतुभूता या प्रकृतिरस्ति, साऽपि परमसूक्ष्माऽतीन्द्रिया चेति, तस्याः सत्त्वमनुमानेनाप्तवचनेनैव साध्यं भवति । तदुक्तम्—

(क) "सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः" ।[४]

(ख) "सौक्ष्म्यात्तदनुपलब्धिः कार्यदर्शनात्तदुपलब्धेः", "सामान्यतो दृष्टादुभयसिद्धिः" ।[५]

तस्य प्रधानस्यानुपलब्धिरनवगमः सौक्ष्म्याद् हेतुर्नाभावात् । सूक्ष्मं प्रधानं शब्दार्थलक्षणत्वात् परमाण्वादिवत् । न पुनरेवं यन्नास्ति प्रधानमतो नोपलभ्यते । किं तु अस्ति प्रधानं नोपलभ्यते, सौक्ष्म्यात् परमाण्वादिवत् ।[६]

---

१. सा० त० वि०–सू० १ ।
२. सा० त० या० दी०–सू० १ ।
३. त० स० सू० वृ०–सू० १ ।
४. सा० का० ८ ।
५. सा० सू० १।१०३, १०९–११० ।
६. सा० का०—भा० वृ० ८ ।

प्रकारान्तराभावात् सूक्ष्मत्त्वात् सतोरपि तयोरनुपलब्धिः। नन्वभावादेव कस्मादनुपलब्धिर्न भवति ? यथा घटस्योत्पत्तेः प्राङ् मृदि तस्य प्रागभावात्, खर्परादिषु तस्य प्रध्वंसाभावात्, गवि वा अश्वत्वस्याश्वत्वे गोत्त्वस्येतरेतराभावात्, बन्ध्यासुतस्य वाऽत्यन्ताभावादित्याह—नाभावादिति। चतुर्विधादित्यर्थः। यद्येवं कथं तौ स्तः इति गम्यत इत्याह—कार्यतस्तदुपलब्धेरिति।[1]

अनुमानं च हेतुर्ज्ञानाधीनम्। तस्मात् प्रकृतेरनुमानाय हेतवः पञ्च निर्दिष्टाः सन्ति। तद्यथा—

(क) भेदानां परिमाणात्।

(ख) समन्वयात्।

(ग) शक्तितः प्रवृत्तेः।

(घ) कार्यकारणविभागात्।

(ङ) वैश्वरूप्यस्याविभागाच्चेति[2]।

भिद्यन्ते परस्परं स्वलक्षणैरिति महदादीनि त्रयोविंशतितत्त्वानि भेदा इहोच्यन्ते। ते च भेदाः सन्ति परिमिताः। यानि तत्त्वानि परिमितानि भवन्ति, तेषां कारणमपरिमितमन्यल्लोके दृश्यते। महदादीनां परिमितत्वदर्शनात्तेषामन्येनापरिमितेन हेतुना भवितव्यमित्यनुमीयते। अनुमानप्रकारश्च—परिमिता महदादयो व्यापककारणवन्तः, परिच्छिन्नत्त्वात्। घटादिवदिति। अत्र यद् व्यापकं कारणं तदेव प्रधानम्। तदुक्तं तत्त्वकौमुद्याम्—परिमितत्त्वाद् अव्यापित्त्वादिति यावत्। विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वात्, घटादिवत्। घटादयो हि परिमिताः, मृदाद्यव्यक्तकारणका दृष्टाः। उक्तमेतद्यथा—कार्यस्याव्यक्तावस्था कारणमेवेति। यन्महतः कारणं तत्परमाव्यक्तम्, ततः परतराव्यक्तकल्पनायां प्रमाणाभावाद्[3] इति।

माठरवृत्तौ च—अस्ति प्रधानम्, कस्मात् ? भेदानां परिमाणात् लोके। यस्य कर्त्ताऽस्ति, तस्य परिमाणं दृष्टम्। यथा कुलालः परिमिताद् मृत्पिण्डात् परिमितमेव घटं कुरुते प्रस्थग्राहकमाढकग्राहकं वा। एवं व्यक्तं परिमितम्। एका बुद्धिरेकोऽहङ्कारः पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्च महाभूतानि इति त्रयोविंशतिकम्। एवमेतत् परिमितं व्यक्तं दृष्ट्वाऽनुमानेन साधयामोऽस्त्यस्य कारणं प्रधानं व्यक्तं परिमितमुत्पादयति। यदि च प्रधानं कारणं न स्यात्, निष्परिमाणमिदं व्यक्तं स्यात्। अस्ति चास्य परिमाणम्, तस्मादस्ति प्रधानमिति[4]।

भिन्नत्वेन भासमानेषु पदार्थेष्वेकस्या जातेः समानत्वजनिकाया योऽनुभवः स समन्वयः। महदादिषु च व्यक्तेष्वध्यवसायादिलक्षणेषु सुखदुःखमोहात्मकत्वेनान्वयदर्शनात् कटकस्वर्णपिण्डयोरनुगतसुवर्णत्ववत् तेषां व्यक्तानां तथाविधेन हेतुना केनाप्येकेन भवितव्यमित्यनुमीयते। तत्प्रकारश्च यथा—"विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, समन्वयात्, मृद्धेमपिण्डसमनुगतघटमुकुटादिवत्" इति। तदुक्तं तत्त्वकौमुद्याम्—

---

१. सा० का०—ज० म० ८। २. सा० का० १५।
३. सा० त० कौ० १५। ४. सा० का०—मा० वृ० १५।

"भिन्नानां समानरूपता समन्वयः। सुखदुःखसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते। यानि च यद्रूपसमनुगतानि, तानि तत्स्वभावव्यक्तकारणकानि, यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम्"[१]।

जयमङ्गलायाश्च—"समन्वयात्। भेदानामिति वर्त्तते। समन्वयोऽनुगमः। एकजात्यनुगमादित्यर्थः। ये एकजात्यनुगता भेदास्तेषामेकमेव तथाभूतं कारणं दृष्टम्। यथा कटककेयूरादीनां सुवर्णपिण्डः। यथा वा शरावादीनां मृत्पिण्डः"।

एवमेषामपि बाह्याध्यात्मिकानां सुखदुःखमोहानुगतत्त्वादेकेन तथाविधेन भवितव्यम्। य एषां समुदायस्तत् प्रधानमिति सामान्यतो दृष्टम्[२] इति।

कारणे या शक्तिरस्ति तन्मूला एव कार्यस्योत्पत्तिर्भवति। न ह्यशक्तं कारणं कार्यमुत्पादयति। अत्र शक्तिपदेन कार्यस्याव्यक्तावस्था ग्राह्येति वाचस्पतिमिश्रः। व्यक्तानां महदादीनामुत्पत्तिनिमित्तं शक्तिरपेक्षिता। सा च निराश्रया न भवति। यश्चासावाश्रयस्तदेवाव्यक्तम्। अनुमानप्रकारस्तु—प्रधानं यावत्कार्यनिरूपितकारणतावद् महदादिकार्यजाताव्यक्तत्वावस्थावत्त्वादिति कृष्णवल्लभाचार्यः स्वामिनारायणभाष्ये। तदुक्तम्—

कारणशक्तितः कार्यं प्रवर्त्तते इति सिद्धम्, अशक्तात् कारणात् कार्यस्यानुत्पत्तेः। शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या। न हि सत्कार्यपक्षे कार्यस्याव्यक्तताया अन्यस्यां शक्तौ प्रमाणमस्ति, अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति[३]।

इह कुलालादिशक्तिपूर्विका घटादीनां प्रवृत्तिर्दृष्टा नाशक्तिपूर्विका एषामपि बाह्याध्यात्मिकानां प्रवृत्तिर्दृश्यते। ततश्च प्राक् प्रवृत्तेर्जनितया शक्त्या भवितव्यम्। यासौ शक्तिः सैवाव्यक्तभावमापद्यत इति सामान्यतो दृष्टम्[४]।

यत्करोति यतो वा किञ्चिदुत्पद्यते तत्कारणम्। यच्चोत्पद्यते तत्कार्यम्। कारणं कार्यञ्च परस्परं भिद्यते। यत् कार्येण साध्यते, तन्न कारणेनापि साध्यते। कारणं कार्यरूपमापद्यते। इत्थं कारणस्य कार्यस्य च विभागदर्शनाद् व्यक्तादीनां कार्याणां कारणं तत्त्वान्तरं कल्प्यते। यत् कारणं तदेवाव्यक्तमिति।

तदुक्तम्—करोतीति कारणम्, क्रियत इति कार्यम्, तयोर्विभागस्तस्मात्। तद्यथा—मृत्पिण्डः कारणं घटः कार्यम्। स एव हि मधूदकपयःप्रभृतीनां धारणे समर्थः, न तु मृत्पिण्डः। एवं व्यक्ताव्यक्तयोर्विभागः। अन्यद् व्यक्तं महदहङ्कारतन्मात्रेन्द्रियमहाभूतपर्यन्तम्, तच्च कार्यम्। अन्यच्च—अव्यक्तं प्रधानं विपरीतं कारणमिति तस्मादस्ति प्रधानम्[५]।

कारणे सत् कार्यमिति स्थितम्। तथा च यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति, विभज्यन्ते—इदं कूर्मशरीरम्, एतान्येतस्याङ्गानि इति। एवं निविशमानानि तस्मिन्नव्यक्ती-

---

१. सा० त० कौ० १५।   २. सा० का०—ज० म० १५।
३. सा० का०—सां० त० कौ० १५।   ४. सा० का०—ज० म० १५।
५. सा० का०—मा० वृ० १५।

भवन्ति । एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते। सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात् कारणात्, सन्नेवाहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तात् साक्षात्पारम्पर्य्येणान्वितस्य विश्वस्य कार्यस्य विभागः[1] ।

कार्याणि स्वकारणेषु लीयमानान्यविभागमापद्यन्ते । तेषामनेकविधकार्याणामविभागदर्शनादपि प्रधानमस्ति । तदुक्तम्—प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्ति । तत्कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति । एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति । एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति । एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति । प्रकृतेस्तु न क्वचिद् निवेश इति सा सर्वकार्याणामव्यक्तमेव[2] ।

जयमङ्गलायान्तु एतद्विषयेऽन्येनैव प्रकारेण व्याख्यातमस्ति—अविभागाद्वैश्वरूप्यस्येति । न विद्यते विभागोऽस्येत्यविभागः । अविभक्तादित्यर्थः । तस्माद्वैश्वरूप्यस्योपलब्धेरिति शेषः । इह लोके अविभक्तादेकस्मादिक्षुद्रव्याद्रसफाणितगुडखण्डशर्करादिवैश्वरूप्यं नानात्वं दृश्यते । तथैकस्माद् दुग्धाद्दधिनवनीतघृतादिवैश्वरूप्यमुपलभ्यते । एवमाध्यात्मिकानां बाह्यानां च वैश्वरूप्यम् । तस्मादेतेषामविभक्तेनैकेन भवितव्यमिति सामान्यतो दृष्टम् ।

अन्यस्त्वाह—अविभागे वैश्वरूप्यस्येति । अविभागो लयः, वैश्वरूप्यं जगद् नानारूपत्वात् । प्रलयकाले वैश्वरूप्यं क्व लीयते स्थित्युत्पत्तिप्रलयाज्जगत इति । न चेश्वरे लयनं सम्भवति, तस्य निर्गुणत्वेनाभ्युपगमात् । तस्मादन्यथानुपपत्त्यास्ति तदेकमिति[3] ।

तथा चाहुः—

प्रधानादानुपूर्व्येण सृष्टिर्लोकस्य संसरः ।
प्रधानात् प्रातिलोम्येन पुनस्तत्रैव चत्वरः ॥[4]

साङ्ख्यसूत्रे प्रवचनभाष्ये च प्रकृतेः कार्येणान्तःकरणेनानुमानं भवतीति प्रतिपादितमस्ति । तद्यथा—ततः प्रकृतेः[5] । ततो महत्तत्त्वात् कार्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः ।

अन्तःकरणसामान्यस्यापि कार्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुपपत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रामाण्याच्च ।

तस्य च प्रकृतिकार्यत्वेऽयं प्रयोगः—सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या कार्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति । कारणगुणानुसारेणैव कार्यगुणौचित्यं चात्रानुकूलस्तर्कः श्रुतिस्मृतयोऽपीति मन्तव्यम्[6] ।

---

१. सा० का०—सां० त० कौ० १५ । २. सा० का०—सा० त० कौ० १५ ।
३. सा० का०—सां० त० कौ० १५ । ४. सा० का०—ज० म० १५ ।
५. सा० सू०—१।६५ । ६. सा० प्र० भा० १।६५ ।

अपि च कारणगुणात्मकत्वात् कार्यस्याप्यव्यक्तसिद्धिर्भवतीति वर्त्तते कारिकाशयः। तद्यथा—"कारणगुणात्मकत्त्वात् कार्यस्याव्यक्तमपि सिद्धम्[1]" इति।

कारणस्य गुणाः, कारणगुणास्ते आत्मा = स्वभावो यस्य तद्भावः कारणगुणात्मकत्त्वम्। आत्मशब्दः स्वभावे वर्त्तते। कारणगुणस्वभावत्त्वात् कार्यस्य। इह लोके यदात्मकं कारणं तदात्मकमेव कार्यमपि भवति। कारणानुगतत्वात् कार्यस्य। यथा कटुनिम्बवृक्षात् कटुरेव रसो भवति, मधुराच्च मधुरो द्राक्षादिरसः[2]।

कार्यं हि कारणगुणात्मकं दृष्टम्, यथा तत्त्वादिगुणात्मकं पटादि। तथा महदादि लक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्वकारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति[3]—इति शम्।

**सङ्केतिताक्षराणां सूची**

१. सा० सू०—साङ्ख्यसूत्राणि।
२. सा० प्र० भा०—साङ्ख्यप्रवचनभाष्यम्।
३. सा० त० वि०—साङ्ख्यतत्त्वविवेचनम्।
४. सा० त० या० दी०—साङ्ख्यतत्त्वयाथार्थ्यदीपनम्।
५. त० स० सू० वृ०—तत्त्वसमाससूत्रवृत्तिः।
६. सा० त० प्र०—साङ्ख्यतत्त्वप्रदीपिका।
७. सा० का०—साङ्ख्यकारिका।
८. सा० त० कौ०—साङ्ख्यतत्त्वकौमुदी।
९. सा० का०-मा० वृ०—साङ्ख्यकारिका माठरवृत्तिः।
१०. सा० का० ज० म०—साङ्ख्यकारिका जयमङ्गला।



१. सा० का० १४। २. सा० का०—मा० वृ० १४।
३. सा० का०—सा० त० कौ० १४।

# दार्शनिकदृष्ट्या यज्ञस्वरूपमीमांसा

श्रीजयप्रकाशत्रिपाठी
दर्शनविभागाध्यक्षः, शास्त्रार्थसंस्कृतमहाविद्यालयः, वाराणसी

अथ यज्ञस्वरूपं विचार्यते—यतो हि यज्ञमूलैव निखिलविश्वस्य संस्कृतिर्वर्तते । तथा हि—यजधातुर्देवपूजायां संगतिकरणे दानेऽर्थे च संकेतितोऽस्ति[1] । तत एव इज्यतेऽनेनेति व्युत्पत्त्या करणेऽर्थे नङ्प्रत्यये[2] कृते सति यज्ञशब्दो निष्पद्यते । एवं च विष्णुप्रभृतिदेवानां पूजा भवति येन कर्मणा, तत्कर्म यज्ञपदेनोच्यते । एवमेव विष्णवादिदेवानां संगतिः क्रियते येन कर्मणा, तदपि यज्ञः । अथ च तान् देवानुद्दिश्य यद्दानं दीयते, तस्मिन् दानेऽप्यर्थे यज्ञशब्दस्य प्रयोगो भवति । विशेषतः स्थलविशेषे यत्रतिलघृतादिभिः क्रियमाणो होमो यज्ञपदेनाभिधीयते, परन्तु तत्रैवावरोधो न कार्यः । अपि तु जपयज्ञो ज्ञानयज्ञो दानयज्ञा इत्यादयोऽपि यज्ञा एव सन्ति । तत्रापि देवैः सह संगतिर्भवत्येव ।

समस्ते भूमण्डले परमात्मनः पूजा येन केनापि रूपेण भवत्येव, देवतोद्देश्यकं दानमपि दीयत एव, देवैः सह संगतिरपि क्रियत एव । देवपदेन गुरवः, पितरः, महापुरुषादयो ग्राह्याः । एवं च यज्ञोऽस्त्येकः कर्मविशेषः । स चास्ति भारतीयजीवनस्यैकोऽतिप्राचीनः सर्वव्याप्यङ्गभूतः । सर्वतः प्राचीनतमोऽयम् ऋग्वेदो भारतीयस्य यज्ञलक्षणस्य धार्मिककर्मविशेषस्य मूलभूताधारो वर्तते । तेनैव ऋग्वेदेनेदमपि ज्ञायते यद् भारतीयानामयमेव यज्ञात्मकः कर्मविशेष एव सर्वोच्चतमो धर्मोऽप्यस्ति । सर्वेऽप्यानन्दजनकीभूता उत्सवाः सर्वाश्च तथाविधा धार्मिकक्रिया अनेनैव यज्ञकर्मणा भवन्ति स्म, भवन्ति च । आर्य(हिन्दू)जातीयव्यक्तीनां जीवने जन्मत आरभ्य मरणपर्यन्तं सर्वा अपि क्रियाः संस्काराश्च यज्ञेनैव निष्पन्ना भवन्ति । भगवतः श्रीकृष्णस्य कथनानुसारं मानवीयं जीवनमेवास्ति सर्वथा यज्ञमयम् । तथा हि—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्[3] ॥

अर्थात् सृष्टिप्रारम्भकालावच्छेदेनैव प्रजापतिः=ब्रह्मा श्रुत्युक्तैर्यज्ञैः सह प्रजा ब्राह्मणादिचतुरो वर्णान् सृष्ट्वा ताः प्रजा उवाच, यूयमवश्यमेवानेन श्रौतेन स्मार्तेन च यज्ञेन पुरोडाशप्रभृतिद्रव्यैर्देवानां प्रीतिमुत्पादयध्वम् । देवानुद्दिश्य श्रद्धया कृतोऽयं यज्ञ इच्छाया विषयभूतान् पदार्थान् प्रयच्छतु । यज्ञद्वारा समस्तान् स्वीयान् कामान् पूरयन्तु । अपि च—

"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातमम्"[4] ।

---

१. यजदेवपूजासंगतिकरणदानेषु–सिद्धान्तकौमुदीभ्वादिगणान्ते ।
२. अष्टाध्यायी–३।३।९० ।
३. श्रीमद्भ० गी०, अ०, ३ श्लोक १० ।
४. ऋ० वे० प्रथममन्त्रः ।

अस्य मन्त्रस्येदमेवास्ति तात्पर्यं यद् मनुष्यस्य सर्वप्रधानभूतो धर्मगर्भितः कर्मविशेषो यज्ञ एवास्ति । तेनैव मानवीयं जीवनं सर्वदा सार्थकं सफलञ्च भवति । मानवीयजीवनस्योत्थानं समुदयश्च दैविकशक्तीनां कृपात एव भवितुमर्हतीति तादृशशक्तिभिर्मानवीयसम्बन्धसंस्थापकश्चायं यज्ञ एव । सांसारिकपरिस्थितो जीवननिर्वाहार्थं सनातनिनाम् (आर्याणाम्) देवाराधनमेवास्ति मुख्यं कर्तव्यम्, तस्य च द्वारं यज्ञ एव । यतो यज्ञसंविधानेनैव मानवाः देवानां शुभाशीर्वादं प्राप्नुवन्ति, देवलोकं वा गच्छन्ति । हवनकरणेन पापानि नश्यन्ति । जपयज्ञेन च मानवानां समस्ता अपि कामनाः पूर्णा भवन्ति । अन्यदप्युक्तम्—

**यज्ञेन देवा जीवन्ति यज्ञेन पितरस्तथा ।**
**देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः ॥**
**यज्ञो हि भगवान् विष्णुर्यत्र सर्वं प्रतिष्ठितम् ।**
**यज्ञार्थं पशवः सृष्टा देवास्त्वोषधयस्तथा ॥**
**यज्ञार्थं पुरुषाः सृष्टाः स्वयमेव स्वयंभुवा ।**
**यज्ञश्च भूत्यै सर्वस्य तस्माद् यज्ञपरो भवेत् ॥**
**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।**
**धनं यद्यज्ञशीलानां देवस्वं तद् विदुर्बुधाः[1] ॥**

यज्ञेन देवगणाः पितृगणाश्च जीविता भवन्ति । समस्ता अपि प्रजा देवाधीनाः सन्ति, देवाश्च यज्ञाधीना इति । 'यज्ञो वै विष्णुः'इत्यादिश्रुतिप्रतिपाद्यत्वाद् यज्ञो यज्ञपुरुषस्वरूपः= विष्णुस्वरूपः । भगवति विष्णौ सर्वमेव प्रतिष्ठितं वर्तते । पशवः, ओषधयः, देवाः, पुरुषा इमे सर्वेऽपि स्वयम्भुवा यज्ञार्थमेव सृष्टाः । यज्ञेन सर्वेषामेव कल्याणं जायते । यज्ञशेषभुजः सर्वेऽपि सर्वपापैः प्रमुच्यन्ते । तथा यज्ञशीलानां धनं पण्डिता देवधनं कथयन्ति । यज्ञेनैव महात्मा पुरुषः स्वर्गे देवैः सम्पूजितो भवति ।

तत्र च नानासुखप्रदवस्तून्यपि प्राप्नोति यज्ञकर्ता पुरुष इति । उक्तं च—

**यज्ञेन सम्यक्पुरुषस्तु नाके सम्पूज्यमानास्त्रिदशैर्महात्मा ।**
**प्राप्नोति सौख्यानि महानुभावस्तस्मात् प्रयत्नेन यजेत यज्ञैः[2] ॥**

इतोऽतिरिक्तमिदमपि समुपदिशन्ति शास्त्राणि यानि च सन्त्यस्माकं पूर्वजमहर्षीणां वाग्रूपाणि यद्यज्ञात्मकमिदं मानवमात्रस्य कर्त्तव्यतावच्छेदककुक्षिनिक्षिप्तमस्ति । अत एतद्विपरीत-मार्गगामी मानवो मानवतातः पतितो भविष्यतीत्यत्र नास्ति लेशतोऽपि संशयावसरः । एतस्मिन् विषये नास्तीदमप्यावश्यकं यन्मानवमात्रस्य कृतेऽतिरुद्रमहारुद्रविष्णुयागप्रभृतीनामेव पुरोडाश-साध्यानामेव महतां यागानां सर्वत्राधिकारोऽस्तीति मन्तव्यं भवेत्, अपि तु यदस्ति स्वीयं कर्तव्यं भगवता नियतं तादृशकर्तव्यपालनमेव वास्तविकं यज्ञकर्म तदेव पूर्णशक्त्या विधेयम् । उक्तं च—

**आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।**
**परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजास्तथा[3] ॥**

---

१. विष्णुधर्मोत्तरपुराणे—६२।१-४ । २. विष्णुधर्मोत्तरपुराणे—६२।१-७ ।
३. महाभा० शा० पर्व—२६७।१२ ।

क्षत्रियाणां कृते पराक्रमोद्योगसंविधानमेव यज्ञः । शूद्राणां कृते च विशुद्धान्तःकरणपुरःसरं सेवासंविधानमेव यज्ञः । द्विजानां कृते जपयज्ञविधानं परमात्मोपास्तिसंविधानमेव यज्ञः । अपि च—

**होमेन पापं पुरुषो जहाति होमेन नाकं च तथा प्रयाति ।**
**होमस्तु लोके दुरितं समग्रं विनाशयत्येव न संशयोऽत्र ।[१]**

यज्ञकर्मसंविधानेन मानवः स्वीयं पापपुञ्जं दूरीकरोति, स्वर्गञ्च प्राप्नोति । समाजस्यास्तित्वसंरक्षणपराणि प्रगतिसम्पादकानि यान्यपि महत्त्वपूर्णानि कार्याणि सन्त्यावश्यकानि, तानि सर्वाणि यज्ञेनैव सिद्धिगतानि भवन्ति । अन्यच्च—

**मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः ।**
**दान्तो यज्वा देवभक्तो ब्रह्मलोके महीयते ॥[२]**

मात्रापित्रोः सेवासंलग्ना गोब्राह्मणयोर्भक्तिभूषिताः, देवभक्ता दानशीलाश्च सर्वेऽपि मानवा यज्ञसंविधानेन ब्रह्मलोके महत्त्वं प्राप्ताः पूजिताश्च भवन्ति । यत एतेषां पूर्वोक्तानां सेवाप्रभृतिकार्याणामपि कर्तव्यताऽवच्छेदककुक्षिनिक्षिप्तत्वेन यज्ञरूपत्वात् । यज्ञो हि नास्ति कस्याश्चिदेकस्या एव क्रियापद्धतेर्नामाऽपरपर्यायः । यद्यपि मीमांसाशास्त्रानुसारमग्निहोत्रज्योतिष्टोमादय एव सन्ति, यज्ञशब्दजन्यबोधविषयतावन्तः, तथापि मनुस्मृतेरनुसारं स्वाध्यायतर्पणातिथिसम्मानादयोऽपि यज्ञशब्दाभिधेया भवन्ति ।

महाभारतानुसारञ्च वर्णोचितानां स्वाश्रमोचितानाञ्च कर्तव्यानां पालनमप्यस्ति यज्ञपदार्थः ।

एतावत्सु परिगणितेषु यज्ञप्रकारेषु कस्यापि यज्ञस्य संविधानेन देवाः सन्तुष्टिं प्रयान्ति । देवानां सन्तुष्ट्या च मानवः सुखं शक्तिं शान्तिमाप्नोति । उक्तं च—

यज्ञादिभिर्देवाः शक्तिसुखादीनाम् । अङ्गिरा अपि च—

**यज्ञेन देवा विमला भवन्ति यज्ञेन देवा अमृतत्वमाप्नुयुः ।**
**यज्ञेन पापैर्बहुभिर्विमुक्ताः प्राप्नोति लोकान् परमस्य विष्णोः ॥[३]**

"यज्ञेन सर्वेऽपि देवा निर्मलतां प्रयान्ति (मलरहिता भवन्तीत्यर्थः) यज्ञेन मानवाः स्वीयानि नानाविधपापानि प्रक्षाल्य भगवतः परमेश्वरस्य विष्णोः परं वैष्णवं धाम गच्छन्ति । एवमन्यत्रापि शास्त्रे धर्मग्रन्थेषु चास्य महत्त्वं श्रूयते ।

अन्यच्चापि महत्त्वं यज्ञस्य—

**आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् ।**
**चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पताम् ॥**
**वाग् यज्ञेन कल्पतां मनो यज्ञेन कल्पताम् ।**
**आत्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पताम् ॥**

---

१. विष्णुधर्मोत्तर पु० १८७।१५ । २. कूर्मपुरा० उत्तरार्धे १५।२४ ।
३. महर्षिहारीतः ।

ज्योतिर्यज्ञेन कल्पतां स्वर्यज्ञेन कल्पताम् ।
स्तोमश्च यजुश्च ऋक् च साम च बृहच्च ॥
रथन्तरं च स्वर्देवा आगमन्मामृता अभूम ।
प्रजापतेः प्रजा अभूम वेट् स्वाहा ॥[1]

अयमर्थः—निमित्तकारणीभूतेन यज्ञेनाऽऽयुर्जीवनकालः कल्पताम् = साध्यताम् = प्राप्यतामित्यर्थः । प्राणचक्षुश्श्रोत्रवाक्-मनांसि मम यज्ञेन क्लृप्तानि भवन्तु । आत्मा = देहः । "आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः" इति स्मृतेः । ब्रह्मा = वेदः, यज्ञेन कल्पताम् । ज्योतिः = स्वयंप्रकाशः परमात्मा यज्ञेन कल्पताम् = साध्यतामित्यर्थः । पुण्यलक्षणकर्मानुष्ठानं परमात्मज्ञाने कारणम् । उक्तञ्च—

"ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"[2] ।

एवम् "कर्मणैव हि संसिद्धिमास्थिता जनकादयः"[3] ।

स्वः = स्वर्गः, पृष्ठम् = स्तोत्रम् = स्वर्गस्थानं वा यज्ञेन कल्पताम् । यज्ञो यज्ञेनैव क्लृप्तो भवतु, नाहं यज्ञक्लृप्तौ समर्थोऽस्मि, नाऽपि भवितुमर्हामि इति यावत् । उक्तञ्च—

यज्ञेन यज्ञमयजन्त देवाः ।[4]

किं च स्तोमो यजुः-ऋक्-साम-बृहद्-रथन्तराणि च यज्ञेन क्लृप्तानि भवन्तु । स्तोमश्च त्रिवृत् पञ्चदशादिः, यजुश्चाऽनियतपादो मन्त्रः; ऋक् नियतपादा, साम च गीतिप्रधानम्, बृहद्-रथन्तरे तद्विशेषौ । वसोर्धारया एवमग्निमभिपिच्यात्मानं यजमानः प्रशंसति । वयं यजमानाः = देवा भूत्वा स्वः = स्वर्गम्, अगन्म = गतवन्तः । गत्वा चामृताः = अमरधर्मिणोऽभूम = भूताः । वेट् स्वाहेति होममन्त्रः । वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते ।

**यज्ञस्यावश्यकता**

कर्ममीमांसायां प्रवर्त्तमानायां सत्यां द्विजो हि मानवशरीरधारणानन्तरमेव ऋषिऋण-देवऋणपितृऋणैस्त्रिभिः ऋणीभवति । आस्तिकार्यजातीयानां कृते यज्ञविषयो महागौरवास्पदीभूतो जायते । यत्रैकतो हिन्दुसमाजे सांसारिकपरिस्थितौ जीवननिर्वाहार्थं देवाराधनस्य मुख्यकर्तव्यता स्वीकृता भवति, तस्या अपि द्वारं यज्ञ एव, तथैव देवर्षिपितॄणां त्रिभिर्ऋणैर्विमुक्तये यज्ञादिसत्कर्माणि नितान्तमपेक्षितानि भवन्ति, अत एतेषां प्रागुक्तऋणत्रयाणां विमुक्तयेऽपि यज्ञस्यैव द्वारता समुचिता प्रतिभाति । उक्तञ्च—

ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ।
यज्ञाऽध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत् ॥[5]

---

१. शुक्लयजुर्वेदसंहिता अ० १८, मन्त्रः २९ ।
२. महीधरभाष्ये द्रष्टव्यो मन्त्रोऽयम्, २९ ।
३. श्रीमद्भ० गी० ३।२० । ४. रुद्राष्टाध्यायी अ० २, म० १६ ।
५. श्रीमद्भागवतमहापुराणे–१०।४५।२९ ।

अतो यज्ञः सर्वथाऽऽवश्यकः। अन्यथा तत्र तत्र स्थलेषु कस्य द्वारता स्यादित्यपि विचार्यताम्।

तैत्तिरीयसंहितायामप्ययं विषयः सम्यग् विचारितः। तथाहि—

जायमानो वै ब्राह्मणस्त्रिभिर्ऋणै ऋणवान्।
जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः॥[1]
प्रजया च पितृभ्यः।

अर्थाज्जायमानो द्विजस्त्रिभिः प्रागुक्तैर्ऋणैर्ऋणवान् भवति, तत्र च ब्रह्मचर्येण ऋषि-ऋणतः, यज्ञेन देवर्णतः, प्रजया =पुत्रेण पितृ-ऋणतो मुक्तिर्भवति।

"ऋणानि त्रीण्यपाकृत्य"।[2]

इत्यादि वदता भगवता मनुनापि पूर्वोक्तर्णत्रयापाकरणार्थं यज्ञात्मकस्य सत्कर्मणः प्राधान्येनावश्यकता दर्शिता। यतस्तावद् ऋणत्रये घटकत्वेन देवर्णमपि समाविष्टमस्ति। ततो विमुक्तये तैत्तिरीयश्रुत्या सुस्पष्टं समुद्घोषितं यदृणत्रयघटकीभूतस्य देवर्णस्याशेषतो व्यावृत्तये = निवृत्तये यज्ञादिसत्कर्मणामनुष्ठानं नितान्तमावश्यकम्। तच्च, सर्वथाऽत्यन्तपावनत्वेनानुपेक्षणीयमस्ति। भगवता श्रीकृष्णेनाप्ययमेव सिद्धान्तः सुदृढीकृतः।

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥[3]

यज्ञः श्रौतः स्मार्तश्च, दानं पात्रेषु धनप्रदानम्, तपश्च स्वाध्यायरूपम्। एवञ्च यज्ञदानतपोलक्षणं त्रिविधं वेदोक्तं नित्यं कर्म मोक्षमिच्छतो गृहस्थस्य वैराग्यसम्पन्नस्य पुरुषस्य न कदाऽपि त्याज्यम्। किन्तु नित्यत्वात् पुरुषार्थहेतुत्वात्तदविधाने प्रत्यवायोऽपि स्यात्, अतो यज्ञोऽध्ययनमिति "अहरहः सन्ध्यामुपासीत्", "उदिते सूर्ये प्रातर्जुहोति" इत्यादि श्रुतिप्रतिपादितं कर्म मोक्षमहिमानस्यावश्यकमेव श्रद्धाभक्तिभ्यां नियमेन विधेयम्। यतस्तावद् यज्ञदानतपोलक्षणानि श्रौतस्मार्तान्येव खलु कर्माणि पवित्रतमानि सन्ति समस्तपापक्षयजनकानि चित्तशुद्धिकराणि भवन्ति। अन्तःकरण-संशोधनद्वारैव ज्ञानस्य तत्फलस्य च कारणानि जायन्ते। अपि च

नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम्।
अयज्ञो न च पूतात्मा नश्यति छिन्नपर्णवत्॥[4]

यज्ञसम्पादनसामर्थ्यविहीनाः पुरुषाः पारलौकिकसुखेभ्यस्तु वञ्चिता भवन्त्येव। परन्तु ते वर्तमानकालीनानामैहिककल्याणानामपि प्राप्तिं नैव कर्तुं प्रभवन्ति। अतस्ते यज्ञविहीना मानवा आत्मपरित्राणस्याभावे छिन्नभिन्नपर्णवन्नश्यन्ति। महाभारतेऽप्यस्योल्लेखो दृश्यते।

तथा हि—

न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथञ्चन।[5]

---

१. तै० सं० ३।१०।५। २. मनुस्मृतौ ६।३५। ३. श्रीमद्भ० गी०, अ० १८।५।
४. यज्ञमीमांसा, प० वेणीरामकृतटीका, पृ० २२। ५. आपद्धर्मपर्व १५१।८।

ये सन्त्ययज्ञा यज्ञपराङ्मुखाः पुरुषास्ते तादृशं श्रेष्ठं लोकं परलोकं नैवाधिगच्छन्ति। स्वकीयकर्मफलस्वरूपमनुष्ययोनिषु प्रेतयोनिषु तिर्यग्योनिषु च यान्ति समायान्ति च। अहर्निशमनिशं पौनःपुन्येन तत्रैव भ्रमन्ति रमन्ते च। इत्थञ्चानारतमेकविंशतिप्रभेदभिन्नदुःखसन्तानसङ्कुलसंसारसरित्तरङ्गे रिङ्गन्तश्चेतननिवहा यज्ञविमुखा सन्तोऽस्य पाञ्चभौतिककलेवरस्य भस्मपुरीषरसान्तवामपरिकल्पयन्तस्तामसं शिक्षणमेव सच्छिक्षणम्, तामसं कर्मैव सत्कर्म, तामसीमुन्नतिमेव समुन्नतिं समधिगच्छन्तो भारतीयानामपि तादृशीमेवासुरीं समुन्नतिं समभिलपन्तो नैकमपि क्षणं सुखं समुपलभन्ते। अथर्ववेदेऽपि प्रोट्टङ्कितम्—

"अयज्ञियो हृतवर्चा भवति।"[1]

अर्थाद् यज्ञपराङ्मुखानां यज्ञाननुष्ठातॄणां पुरुषाणां तेजो नश्वरतां गच्छति। महर्षेर्भरद्वाजस्य "यागपरः पुरुषधर्मः" इत्यस्यानुसारेण यज्ञो हि मानवजातेर्विशेषधर्मो वर्तते। अतो मानवानां कृतेऽस्तीदमावश्यकं यत्ते स्वीयं जीवनं यज्ञमयं विदध्युः। यथा चास्माकं प्राचीनाचार्यचरणानां महर्षीणां जीवनं यज्ञमयं प्राक्कालावच्छेदेनाप्यासीत्। ते चास्माकमृषयो यागादिद्वारैव देवान् सन्तोषयन्तः सर्वा अपि सिद्धीरात्मसात् कृत्वा स्वीयं विश्वस्य च कल्याणं प्रकुर्वाणा एव दृष्टिगोचरतां गच्छन्ति स्म। एतेनेदं सुनिश्चितमस्ति यद्यज्ञद्वारैव मानवीयं जीवनं समुन्नतं सुशान्तिकरं सुखविशिष्टञ्च भवितुमर्हतीति।

ये च यज्ञवैधुर्यावच्छिन्ना यज्ञविमुखाः पापयोनयो जनाः श्रद्धाभक्तिविहीना भक्तिभावविधुराः सन्तो यज्ञं नानुतिष्ठन्ति ते देवतानां कोपभाजनभूता भवन्ति। देवतानां कुपितत्वात् तादृशकोपजन्यदुःखान्धकारः प्राणिमात्रं व्याप्नोति विनाशोन्मुखत्वञ्च नयति। उक्तञ्च—

यज्ञे नष्टे देवनाशस्ततः सर्वं प्रणश्यति।[2]

अपि च—

यज्ञे विनष्टे सकलाः प्रजाः क्षुद्भयकातराः।
वृष्ट्यभावाद् महद्दुःखं प्राप्य नष्टाश्च काश्चन॥[3]

अर्थाद् यज्ञानामभावेन देवतानां नाशो भवति, तन्नाशेन च सर्वमेव जगत् प्रणश्यति। यज्ञानामजायमानत्वेन सर्वा अपि क्षुद्भयकातरा भवन्ति। वृष्टेरभावाच्च महद्दुःखं प्राप्नोति, तासु च काश्चन प्रजा नष्टा अपि जायन्ते। इदमेव विषयजातं पुनः "द्विर्बद्धं सुबद्धं भवति" इति न्यायेन सुबद्धं विधीयते।

यज्ञाभावात्तु देवानामन्नं सर्वं क्षयं गतम्।
पर्जन्याश्च ततो नष्टास्ततो वृष्टिर्न चाभवत्॥
वृष्ट्यभावे तु लोकानामाहाराः क्षीणतां गताः।
दुर्भिक्षव्यसनोपेते सर्वलोके द्विजोत्तमाः॥[4]

---

१. अथर्ववेदे। २. वायुपुराणे—६०।६।
३. कालिकापुराणे—२१।१६। ४. कालिकापुराणे—२०।११२-११३।

देवानां कृते यज्ञाभावदर्शनादन्नक्षयो जायते पर्जन्याश्च नष्टा भवन्ति। तेषु विनष्टेषु वृष्टिर्न जायते, वृष्टेरभावाच्च मानवानामन्येषामपि प्राणिनामाहाराः क्षीणतां गच्छन्ति। सर्वेऽपि द्विजोत्तमाः पुरुषा दुर्भिक्षव्यसनोपेताः सञ्जाता इत्यनुभूयते। अत एतेषां दोषाणां निराकरणार्थं यज्ञसंविधानं नितान्तमावश्यकम्, अस्मिन् विषये महर्षिवसिष्ठ इत्थं वदति।

यज्ञात् सृष्टिः प्रजायन्तेऽन्नानि विविधानि च।
तृणान्यौषधान्यथ च फलानि विविधानि च॥
जीवानां जीवनार्थाय यज्ञः सक्रियतां बुधैः॥

अर्थाद् यज्ञात् सृष्टिः प्रचलति, विविधानि अन्नानि च जायन्ते, एवंविधानि तृणानि फलान्यौषधानि च प्रजायन्ते। अतो बुधैर्जनैर्जीवानां जीवनार्थायावश्यमेव यज्ञो विधेयः।

प्राचीनकाले जना यज्ञं प्रति श्रद्धाभक्तिसमन्विता दृष्टिगोचरतां गच्छन्ति स्म। अत एव ते समये समये यज्ञादिधार्मिकसंविधानपरायणा आसन्। येन तेषां विश्वस्य च कल्याणं जायमानमासीत्। तस्मिन् समये सर्वेऽपि प्राणिनः सर्वथा सुखास्पदीभूता आसन्, शान्ति तृप्तिश्च गता आसन्। अतिवृष्टयनावृष्टिभूकम्पाकालमृत्युप्रभृतिरोगाणां दोषस्वरूपाणां नाममात्रमपि ज्ञानविषयीभूतं नासीत्। देवाश्च सर्वथा सन्तुष्टिं प्राप्ता आसन्। तेषां तुष्टचैव जनाः पुत्रपौत्रादिसमन्विता भवन्ति स्म, धनधान्यादिसर्वविधैहिकसुखसामग्रीसम्पन्नाश्चासन्, मरणानन्तरञ्च स्वर्गलोकं प्राप्नुवन्ति स्म।

इदानीं यज्ञादिपवित्रशुभकर्मानाचरणजन्यशैथिल्यदर्शनादकीर्तिरागद्वेषेर्ष्यालोभादयो दोषा दृष्टिगोचरतां गच्छन्ति, अत एव जना दारिद्रयसमन्विताः, अकल्याणकारणीभूतनग्नताण्डवं प्रकुर्वाणाश्च दृष्टिपथमायान्ति। एतादृशावापोद्वापाभ्यां यज्ञलक्षणस्य धार्मिककर्मणः सार्थकत्वमावश्यकत्वञ्च निश्चीयतेऽनुभूयते च। अपि च—

यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते।[1]

अनेकयज्ञसंविधानपरायणो हि मानवो देवत्वम्, अथवा इन्द्रेण सह दिव्यान् भोगान् भुङ्क्ते। यज्ञविहीनपुरुषाणां कदाऽप्यूर्ध्वगमनं न भवतीत्यपि सुनिश्चितमस्ति। यज्ञमयजीवनसम्पादनपरा हि मानवा यज्ञप्रभावेण देवयानद्वारा देवलोकं प्राप्नुवन्ति। सर्वमप्येतदूर्ध्वगमनमिन्द्रादिलोकगमनं नीचैर्वा गमनं ग्रहाणां परिस्थितिमाश्रित्यैव भवति। अत एव स यज्ञो ग्रहयज्ञशब्देनोच्यते। तथा चोक्तम्—

ग्रहा राज्यं प्रयच्छन्ति ग्रहा राज्यं हरन्ति च।
ग्रहैर्व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम्॥[2]

ग्रहयज्ञकर्तृभ्यो मानवेभ्यो ग्रहा अनुकूलाः सन्तो राज्यं प्रयच्छन्ति, तद्विमुखानाञ्च जनानां प्रतिकूलाः सन्तः सर्वमपि राज्यं हरन्ति। इदञ्च समस्तं चराचरात्मकं त्रैलोक्यं ग्रहैर्व्याप्तमस्ति। इतोऽतिरिक्तमिदमप्यस्ति—

---

१. पद्मपुराणे सृष्टि०—१३।३६८। २. प० वेणीरामकृतयज्ञमीमांसायाम्।

तोषितास्तु ग्रहाः सर्वे शान्तिं कुर्वन्ति सर्वदा ।
द्विपदे चतुष्पदे वापि शरीरे वाहने गृहे ॥
ग्रहाधीनं जगत्सर्वं ग्रहाधीना नरावराः ।
सृष्टिरक्षणसंहाराः सर्वे चापि ग्रहानुगाः ॥[1]

सर्वथा सन्तोषिता ग्रहाः सर्वदैव शान्ति शक्ति सुखं प्रयच्छन्ति । अतस्तेषां ग्रहाणां प्रसादेन मनुष्येषु चतुष्पदेषु शरीरेषु वाहनेषु गृहेषु च सर्वत्रैव शान्तेर्वातावरणं व्याप्तमालोक्यते, न कदाप्यशान्तेर्वातावरणमनुभूयते । यतः सर्वमेवेदं जगद् ग्रहाधीनं पश्यामः । नराः–अवराश्च सर्वेऽपि जीवाः सन्ति ग्रहाधीनाः । सृष्टिसंविधानं तस्याः संरक्षणकरणम्, तथा संहारविधानञ्चेत्यादयः सर्वेऽपि विषयाः सन्ति ग्रहाणामनुगामिनः ।

(१) ग्रहात्मकलक्षहोमसंविधानेन मानवीयाः सकला अपि कामनाः परिपूर्णा जायन्ते, तथा स ग्रहात्मकलक्षहोमविधायकः पुरुषोऽष्टशत (८००) कल्पपर्यन्तं वस्वादित्यमरुद्गणप्रभृतिभिः सम्मानितः पूजितश्च जायते शिवलोके । तदनन्तरञ्च मोक्षपदमधिगच्छति ।

(२) लक्ष्म्या शान्तेश्चेच्छुकाणां जनानां कृते विशदीकृतो विषयोऽग्निपुराणे १४२।२ द्रष्टव्यः ।

(३) अनेनैव च नवग्रहयज्ञेन चक्षुषो दृष्टिजीवनम्, आयुः, शरीरस्य पुष्टिः, स्वास्थ्यं चापि जायते । अयमपि विषयस्तत्रैव द्रष्टव्यः ।

अपि च—

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्टचायुः पुष्टिकामो वा तथा वाभिचरन्नपि ॥
यानपत्या भवेन्नारी दुर्भगा वापि या भवेत् ।
बालका वा म्रियन्ते या च कन्या वरार्थिनी ॥
राज्यभ्रष्टो नृपो यश्च दीर्घरोगी च यो भवेत् ।
ग्रहयज्ञः स्मृतस्तेषां मानवानां मनीषिभिः ॥[2]

अर्थाद् धनविषयककामनावद्भिरवश्यमेवाऽथवा ग्रहजन्यायाः पीडायाः शान्तिमिच्छद्भिः पुरुषैरपि ग्रहयज्ञो विधेयः । दृष्ट्यायुःकामः, पुष्टिकामः, आभिचारिककर्मसम्पादनपरोऽपि मानवो ग्रहयज्ञं समाचरेत् । अनपत्या दुर्भगा भाग्यहीना या नारी भवेत्, अथवा यस्या नार्या बालका जायन्ते म्रियन्ते च, कन्या च वरार्थिनी भवेत्, राजा च राज्यभ्रष्टो भवेत्, कश्चन दीर्घरोगिणोऽपि भवेत्, तासां सर्वासां स्त्रीणां कृते पुरुषाणाञ्च कृते विद्वद्भिर्ग्रहयज्ञो विहितः । तेन ग्रहयज्ञ-संविधानेन रोगिणां रोगाः सर्वथा निराकृता भवन्ति । राज्यभ्रष्टानां राज्ञाञ्च राज्यं पुनः सम्प्राप्तं भवति । तथा च तत्तत्कामवतां प्राणिनां समस्ता अपि ताः कामना परिपूर्णा भवन्ति, नाप्य-वशिष्टा नाप्यपूर्णाश्च जायन्ते । प्रसन्नभूताश्च ते नवग्रहा, आयुः, जीवनम्, विद्याम्, शान्तिं सुखञ्च प्रयच्छन्ति । धर्मार्थकामान् त्रिवर्गं चापि प्रयच्छन्ति, बहुपुत्रताञ्चापि प्रयच्छन्ति, शत्रूणां विनाशञ्च

१. प० वेणीरामकृतयज्ञमीमांसायाम् ।    २. शान्तिचिन्तामणौ ।

प्रकुर्वन्ति, राजसु पूज्यतां सम्मानञ्च दिशन्ति। इमे तुष्टाः सर्वेऽपि ग्रहाः सर्वमेवैतद् दिशन्ति। तथा चोक्तम्—

**आयुश्च विद्याञ्च तथा सुखञ्च धर्मार्थकामान् बहुपुत्रतां च।**
**शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः सर्वमेतद् दिशन्ति[1]॥**

अत्रेदं विचारणीयम्—ग्रहा दुःखं न ददति, अपि तु स्वकृतकर्मणां फलस्य सूचका एव भवन्ति। अस्यां स्थितौ तेषां यजनेन कथं सुखावाप्तिरिति चेत्, उच्यते, कर्मफलदाता परमेश्वरो यस्य कर्मणः फलं दातुमिच्छति, तदनुगुणतया तत्तद्ग्रहं प्रेरयति। तस्य ग्रहस्य परमाणवः कर्मकर्तुः शरीरे उपचिता भवन्ति, ततश्च दुःखमुत्पद्यते। यथा यदि कस्यचित् पुरुषस्य कर्म इदृशमस्ति, यदस्य कफजन्यदोषेण पीडा भवतु। तदा चन्द्रमसो ग्रहस्य परमाणवस्तस्य शरीरे उपश्लिष्यन्ति। कफजन्यं कष्टं प्रददति। चन्द्रमसो यज्ञेन ते परमाणवः शान्ता भवन्ति, दूरीभवन्ति वा। यज्ञस्येयद्यन्महत्त्वम्, तत्राश्चर्यं न विधेयम्। पश्यन्तु भवन्तः सार्षपतैलसहितेन रक्तमरीचिना (लाल मिर्चा) द्विदलस्य यदा संस्कारः क्रियते, तदा तदुत्थितेन धूमेन समस्तं गृहं व्याप्तं भवति, नासिकया छिक्का क्रिया विधीयते। एतत्तु सर्वैरनुभूयत एव। तथैव हवनादियज्ञकर्मणि अग्नौ तिलघृतादितेजीयोद्रव्यप्रक्षेपेण तादृशं वायुमण्डलं व्याप्तं भवति, येन समस्तानां दोषाणामुपशान्तिर्जायते। सद्यः स्वास्थ्यं लभ्यते। एवमेव जपयज्ञस्यापि महनीयं महत्त्वं विचारणीयम्। शब्दतत्त्वं तु सर्वत्राकाशे व्याप्तमेवास्ति। भगवतो गुणकर्मनाम्नां पुनः पुनरुच्चारणं मन्त्राणां वा उच्चारणं जपयज्ञः कथ्यते। तत्र सर्वव्यापिनी देवशक्तिर्झटिति शृणोति, अनुकूलं फलं च संप्रददाति।

अतश्चैतन्निःसंशयं सिद्धम्, यद् यज्ञेनैव विश्वस्य प्रतिष्ठा अस्ति। सुखशान्त्यादिकं सर्वं यज्ञेनैव सम्पद्यते इति शम्।



---

१. शान्तिचिन्तामणौ।

# उपनिषदः

कु० चन्द्रकान्तादेवी, अनुसन्धात्री
**संस्कृत-पालिविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी**

उपनिषदो वैदिकभाषाया विकासरूपाः। उपनिषद्ग्रन्थानामाविर्भावाद् मानवसंस्कृतेरितिहासे सर्वथैव नवीनयुगस्य सूत्रपातो भवति स्म। उपनिषत्सु द्विविधा विद्या उल्लिखिता—**परा, अपरा** च। तत्र उपनिषदः पराविद्या इति व्यपदिश्यन्ते। इयं पराविद्या-ब्रह्मविद्यासंज्ञाभ्यां प्रसिद्धा लोके। तासूपनिषत्सु महर्षय आध्यात्मिक्या विद्याया गूढतमानां रहस्यानां विशदतया विचारं कृतवन्तः। भारतीयविचारशास्त्रस्य श्रेष्ठोपजीव्यग्रन्थत्वादुपनिषदः प्रस्थानत्रय्यां प्रथमप्रस्थानत्वेन गण्यन्ते।

कर्मणां ज्ञानानाञ्चोभयानामुद्भावना वेदेषु वर्णिता। कर्मभावनया ब्राह्मणग्रन्थानां ज्ञानभावनया चोपनिषदां रचना सञ्जाता। कर्मकाण्डप्रधानेषु ब्राह्मणग्रन्थेषु विहितान् पशुहिंसादीन् प्रति विचारवतां मनीषिणां हृदये कर्मकाण्डं प्रति किलाविश्वासो जागर्ति स्म। कर्मकाण्डस्य विरोध एव ज्ञानकाण्डस्याभ्युदयो जातः, यत्प्रतिपादका ग्रन्था उपनिषदः। एता मन्त्रसंहितया सह सम्बद्धाः।

इत्थमेकस्मादेवोद्गमादुद्भूता उपनिषदो ब्राह्मणग्रन्थाश्च सर्वथैव विरोधिविचारधारयोः प्रवर्तन्ते। भारतीयाध्यात्मचिन्तनस्य पराकाष्ठा उपनिषत्सु समाहिता। सर्वेषां दर्शनग्रन्थानां मूलभूता उपनिषद एव। उपनिषद्युगे जीवजगद्ब्रह्मविषयकाणां गूढविषयाणां समाधानं जिज्ञासानाञ्च समाधानमभूत्। जन्ममरणसन्न्यासभावनानां सूत्रपात उपनिषद्ग्रन्थेभ्य एव सञ्जातः। कर्मकाण्डप्रधानेषु ब्राह्मणग्रन्थेषु धर्मस्य स्थूलरूपं प्रतिपादितम्। ज्ञानप्रधानेषूपनिषत्सु तु तस्यातिसूक्ष्मरूपमालोचितम्। वेदेभ्य उन्मुक्ता भावप्रधाना ऋषय उपनिषद्युगे गम्भीरमीमांसायामेकाग्राध्ययने च संलग्ना बभूवुः। उपनिषत्सु प्रतिपादितानां ज्ञानसूत्राणां व्याख्यैव दर्शनग्रन्थानां प्रतिपाद्यविषयः।

उपनिषत्सु अद्वैतविशिष्टाद्वैतद्वैतश्रुतीनाञ्च सद्भावः। आचार्यैः स्वसिद्धान्तप्रतिष्ठापिकाः श्रुतयः प्रधानत्वेन स्वीकृताः। अन्यासां श्रुतीनां गौणत्वञ्च तैरुपपादितम्। आचार्यशङ्करः स्वभाष्येणाद्वैतम्, रामानुजाचार्यो विशिष्टाद्वैतम्, मध्वाचार्यश्च द्वैतं प्रत्यपादयन्। उपनिषत्स्वेतेषां दर्शनानां सर्वाण्येव बीजानि निहितानि। सत्यमिदं यदुपनिषद ऋषीणामाध्यात्मिकविचाराणां मनोज्ञो महान् कोशः। एता वैदिकसाहित्ये वेदान्तसंज्ञयाऽभिधीयन्ते। ब्रह्मज्ञानमात्मज्ञानाय ब्रह्मात्ममोक्षज्ञानप्रदानसामर्थ्याद् उपनिषद्विद्या, ब्रह्मविद्या, आत्मविद्या, मोक्षविद्या चेति कथ्यते। सर्वप्रथमं तु ताभिरेव सर्वान्तर्यामिसर्वगुणातीतं परमतत्त्वं ब्रह्म अनुभूतं साक्षात्कृतञ्च।

उप + नि—उपसर्गपूर्वकस्य विशरणगत्यवसादनार्थकस्य 'षदलृ' धातोः क्विबन्तस्य रूपमिदमुपनिषदिति। उपनिषदामध्ययनेन दृष्टानुश्रविकविषयवितृष्णानां मुमुक्षूणां संसारस्य

बीजभूता अविद्या नश्यति, ब्रह्मतत्त्वमनुभूयते, दुःखानि च क्षीणानि भवन्ति। ब्रह्मणः स्वरूपस्य तदवाप्त्युपायस्य जीवस्य, जगतः, किञ्चात्मनोऽपि सविस्तारवर्णनैरेतासामुपनिषद्संज्ञा युक्तैव। अस्य शब्दस्यापरा अपि व्युत्पत्तिः, गुरोः समीपं श्रद्धापूर्वकं स्थित्वा प्राप्यमाणं गुह्यज्ञानमेव 'उपनिषद्' इति दत्ता। इत्थं ज्ञानस्य प्रतिपादका गुरोरुपदेशा येषु ग्रन्थेषूपनिबद्धास्तेऽपि गौण-रूपेणोपनिषन्नामका एव।

**'सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्।'**

इत्येतन्मुक्तिकोपनिषद्वाक्यमनुसृत्योपनिषदोऽष्टोत्तरशतादप्यधिकाः। प्राप्तासु अष्टोत्तरशत-संख्यासूपनिषत्सु प्रायेण द्वादशोपनिषदः प्राचीना विशदा विषयवर्णनपराश्चेत्यतिशयेन प्रामाणिका। ऋग्वेदीयोपनिषत्सु ऐतरेय-कौषीतकीति, सामपरकोपनिषत्सु छान्दोग्य-केनेति, कृष्णयजुर्वेदविषयकासूपनिषत्सु तैत्तिरीय-महानारायण-कठ-श्वेताश्वतर-मैत्रायण्युपनिषदः, शुक्ल-यजुरधिकृत्येशावास्योपषिषद्, बृहदारण्यकम्, अथर्वनिष्ठास्वेतासु मुण्डक-माण्डूक्य-प्रश्नोपनिषद-श्चातितरां प्रथिताः प्राचीनाश्च सन्ति।

**मुख्योपनिषदः**

(१) **ईशावास्योपनिषद्**—शुक्लयजुर्वेदस्य माध्यन्दिनसंहिताया अन्त्याऽध्याय एव **'ईशावास्योपनिषद्'** इति। ईशावास्यमिदं सर्वमित्याद्याद्यपद्यानामाधारत्वाद् एव ईशोपनिषद् ईशावास्योपनिषद् वाऽस्याः संज्ञा सञ्जाताः। नायमुपनिषद्ग्रन्थः कर्मसन्न्यासस्य पक्षपाती, किन्तु यावज्जीवनं निष्कामकर्मसम्पादनस्यानुरागी वर्तते। ब्रह्मविद्यां संक्षेपेण प्रभावेण च प्रकाश-यितुमलमयमुपनिषद्ग्रन्थः।

(२) **केनोपनिषद्**—सामवेदस्य जैमिनीयशाखाया ब्राह्मणग्रन्थस्य नवमोऽध्यायः 'केनोप-निषद्' इति। इयं ब्राह्मणोपनिषद् इत्यपि कथ्यते। अस्यां चत्वारि खण्डानि सन्ति। अत्र ब्रह्मतत्त्वस्य सम्यक् प्रतिपादनम्। तस्य ब्रह्मणः सत्तयैव वाक्चक्षुर्मनांसि स्वकर्म कर्तुं प्रभवन्ति—

**यन्मनसा न मनुते येनाहुर्मनो मतम्।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥**[1]

(३) **कठोपनिषद्**—कृष्णयजुर्वेदस्य कठसंहिताया अंशभूता इयमुपनिषद्। अत्र द्वावध्यायौ तदन्तर्गता षड् वल्लयश्च विराजन्ते। यमराजेन नचिकेतसं प्रति ब्रह्मतत्त्वस्योपदेशोऽस्य प्रतिपाद्यो विषयः। एक एव पुरुषः सर्वेषु भूतेष्वनुप्रविष्टः, किन्तु शरीरदोषेण न दुष्यति—

**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥**[2]

अपि च—

**तमेव पुरुषं ज्ञात्वा प्राणिनः मोक्षं लभन्ते।**
**यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति॥**[3]

---

१. केनोपनिषद्—१।५। २. कठोपनिषद्—२।२।१२। ३. तदेव—२।३।८।

**(४) प्रश्नोपनिषद्**—अथर्ववेदस्य पिप्पलादसंहिताया ब्राह्मणग्रन्थस्यैको भागः **'प्रश्नोपनिषद्'** इति नाम्ना प्रथितः। अत्र षड्भि ऋषिभिः पृष्टानामध्यात्मविषयकाणां प्रश्नानामुत्तराणि महर्षिपिप्पलादेन दत्तानि। इत्थमियमप्युपनिषद् ब्रह्मविषयकजिज्ञासयैव सम्बद्धा।

**(५) मुण्डकोपनिषद्**—शौनकसंहिताया उद्भूतोऽयमुपनिषद्ग्रन्थः। सृष्टेरुत्पत्तिः कर्मकाण्डस्य क्षीणताया वर्णनोपरान्तं ब्रह्मज्ञानमेवात्र सम्यक् प्रतिपादितम्।

**(६) माण्डूक्योपनिषद्**—अथर्ववेदेन सम्बद्धो लघुग्रन्थोऽयम्। अत्र द्वादशमन्त्राः सङ्गृहीताः। अस्मिन् ग्रन्थे ओङ्कारस्योपलब्धिविषयो वर्णितः। लघ्वाकारोऽपि सारगर्भितोऽयमुपनिषद्ग्रन्थः।

**(७) तैत्तिरीयोपनिषद्**—कृष्णयजुर्वेदस्य तैत्तिरीयसंहिताया ब्राह्मणग्रन्थस्यान्त्यो भागस्तैत्तिरीयारण्यकम्। तत्र दश प्रपाठकाः। सप्तम्य आरभ्य नवमपर्यन्तं तैत्तिरीयोपनिषद्। ओङ्कारस्य महत्त्वं ब्रह्मतत्त्वस्य विवेचनं चात्र प्राप्यते।

**(८) ऐतरेयोपनिषद्**—ऋग्वेदस्यैतरेयब्राह्मणस्यान्त्यो भाग ऐतरेयारण्यकम्। तस्यैव किञ्चन मात्रत्वमैतरेयोपनिषदिति। अस्यास्त्रिष्वध्यायेषु सृष्टिजीवब्रह्मतत्त्वानां विवेचनं महता समारम्भेण कृतम्।

**(९) छान्दोग्योपनिषद्**—सामवेदस्य तलवकारब्राह्मणेन सम्बद्धा इयमुपनिषद्। अस्याम् अष्टाध्यायाः, कर्मोपासनाया ज्ञानस्य चात्र विशदं विवेचनम्। षष्ठाध्याये उद्दालको स्वपुत्रं श्वेतकेतुं प्रति तदादेशं वर्णयति, येन सर्वमेवाविज्ञातं विज्ञातमिव भवति—**'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति'**[1]। (छान्दोग्य० ६।१।३)

**(१०) बृहदारण्यकोपनिषद्**—शतपथब्राह्मणस्य अन्त्याः षडध्याया बृहदारण्यकोपनिषद्। बृहदाकारायामस्यामुपनिषदि सृष्टेर्ब्रह्मणस्योपरि विचारितम्। तथा हि—

**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि'**[2] इति।

**(११) कौषीतक्युपनिषद्**—अस्यामृग्वेदीयोपनिषदि चत्वारोऽध्यायाः। प्राचीनतमोऽयमुपनिषद्ग्रन्थो देवयानपितृयानादिविषयाणां वर्णनं करोति।

**(१२) श्वेताश्वतरोपनिषद्**—कृष्णयजुर्वेदस्य श्वेताश्वतरब्राह्मणस्य प्रथमभागोऽयमुपनिषद्ग्रन्थः। ब्रह्मसाक्षात्कारेणैव सर्वपापनिरोधो मोक्षावाप्तिश्चेति सिद्धान्तोऽस्य। तथा च तत्रत्या श्रुतिः—**'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'**[3] इति।

शङ्कराचार्यो यासामुपनिषदां भाष्यं लिलेख, ता इमाः सन्ति—ईश-केन-कठ-मुण्डक-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यक-नृसिंहपूर्वतापिन्युपनिषद्प्रभृतयः। न इमाः सर्वा एकस्मिन्नेव काले प्रणीताः, किन्तु काले काले एव तासां रचना जाता। उपनिषत्सु ये विचाराः संकलितास्ते स्वनिर्माणकालादपि प्राचीनाः। उपनिषदामैतिहासिकं साक्ष्यं पाणिनिकृताष्टाध्याय्यामप्यवाप्यते। एकस्मिन् सूत्रे **'उपनिषद्'**शब्दस्य प्रयोगं दर्शं दर्शं किलैतिहासिकाः पाणिनेः पूर्वमेवोपनिषदां स्थितिं स्वीकुर्वन्ति।

---

१. छान्दोग्योपनिषद्—६।१।३। २. बृ० उ० ४।५।६; ३. श्वेताश्वतरोपनिषद्—३।८।

विषयदृष्ट्या वेदानां त्रयो विभागाः—कर्म, उपासना ज्ञानं च। कर्मणां प्रतिपादनं संहितासु ब्राह्मणभागेषु चाभवत्। उपासना संहितासु आरण्यकग्रन्थेषु च प्रतिपादिता। ज्ञानस्य प्रतिपादिका इमा उपनिषदः, याभिर्मोक्षस्य साधनभूतो मार्गो निर्दिष्टः।

उपनिषदां प्रधानः प्रतिपाद्यविषय आत्मा। संहितात आरण्यकं यावद् ब्रह्मजीवात्मनो-भिन्नत्वं प्रतिपादितमस्ति। उपनिषत्सु तयोरभिन्नत्वं व्याख्यातमस्ति। द्वयोरपि अभिन्नत्वाद् जीवाध्यात्मतत्त्वयोरेकत्वाच्च आत्मैवैकः सर्वत्र। न च तं विहाय कोऽप्यन्यः पदार्थ इति ह्युप-निषदुक्तिभिः साधु निरणायि। तच्चात्माख्यं तत्त्वं पूर्णमस्ति। वस्तुतो न हि द्रष्टृभिन्नता। आत्मैव सर्वव्यापी। विश्वस्य सर्वेष्वपि पदार्थेषु स एव व्याप्तः। समग्रस्यापि प्रपञ्चस्य लयस्तस्मिन्नेव भवति।

उपनिषद्विद्या ब्रह्मविद्या। ब्रह्मविद्या तत्कालमेव फलदायिनी भवति। कर्मणां फलं विनश्यति, ब्रह्मविद्यायाः फलममृतम्। आचार्यैर्वेदान्तदर्शनानि त्रिषु भागेषु विभक्तानि—श्रुतिः, स्मृतिर्न्यायश्च। तत्रोपनिषदः श्रुतिभागे गृह्यन्ते। प्रकृतिपुरुषपरमात्मनां विवेक एवोपनिषद्विद्यायाः प्रतिपाद्यविषयः। प्रकृत्या एव जगतोऽस्तित्वं वर्तते। तदेव प्रकृतिः 'माया' इति नाम्नाऽ-भिहिता। इयं माया उपनिषत्सु विविधैः प्रकारैर्वर्णिता। जीवब्रह्मणोरभेदनिरूपणमपि तत्र सम्यक् सम्पादितम्। यथा—**'तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'**[1] इति।

एवमेव—**'सर्वं खल्विदं ब्रह्म'**[3] इति।

सृष्टिवर्णनमपि तत्र प्राप्यते—**'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'**[2] इति।

उपनिषदो भारतीयाध्यात्मसाहित्यस्य भास्वराणि रत्नानि। तेषां ह्युपनिषद्रत्नानां दिव्ययाऽऽभया को न भुवि मतिमान् आवर्जितो नु जातः? शाहजहाँसुतस्य दाराशिकोहस्य उपनिषत्प्रेम जगति विदितमेव। विकलं शोकाकुलं च चित्तं शमयितुमुपनिषत्सु विपुला सम्पत्तिः। वैदेशिकानां विपश्चितां समक्षं यदैवायमलौकिको विश्वाभिरामः प्रकाशः समागतस्तदा ते विद्वांसोऽमुह्यन्। जर्मनविदुषा पालडायसनमहोदयेन स्वकृते 'Philosophy of the Upnisadas' नामके ग्रन्थे उपनिषद्विचार इत्थं प्रशंसितः—'उपनिषत्सु या दार्शनिककल्पना सा न केवलं भारते, अपि तु समस्तविश्वेऽपि अतुलनीया' इति।

फ्रेडरिकश्लेगलमहोदयेन स्वकीया भावा इत्थं व्यक्ताः—'उपनिषदां समक्षं यूरोपीय-तत्त्वज्ञानं प्रचण्डमार्तण्डस्य अग्रे प्रदीपदर्शनमिव प्रतिभाति' इति।

उपनिषदामध्ययनेनात्यन्तिकानन्दानुभूतिरवगम्यते। यथोक्तं शॉपेनहावरमहोदयेन—'It has been the solace of my life and will be the solace of my death'.

भारतीयतत्त्वज्ञानस्य धर्मसिद्धान्तानाञ्च मूलस्रोतःस्वरूपा उपनिषदः। एता वस्तुतस्तदा-ध्यात्मिकमानसरो यस्मादाविर्भूय ज्ञानस्य विविधाः सरितो विश्वस्य दार्शनिकानां हृदयेषु पुण्य-मादधाना मानवमात्रस्यैहिककल्याणमामुष्मिकमङ्गलञ्च सम्पादयितुं जगतीतलेऽस्मिन् निरन्तरं प्रवहन्तीति शिवम्।

● ● ●

---

१. छा० उ० ६।६।१२; २. तदेव—३।१४।१; ३. तदेव—६।२।१।

# व्याकरणाध्ययनोपयोगित्वविमर्शः

ओझोपाह्वरामनन्दनः
**भूतपूर्वप्राचार्यः, रीवांस्थशासकीयसंस्कृतोपाधिमहाविद्यालयस्य**

**'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि'**[1] नामरूपात्मके दृष्टप्रपञ्चेऽस्मिञ्जगति जीवाः स्वस्वकर्मानुसारं विविधयोनिषु जन्म लभन्ते। यतः **'पूर्वकर्मानुगो जीवः'** इत्यभियुक्तोक्तिः। दुःखत्रयाभिभूतस्स तदभिघातके हेतौ जिज्ञासते। ततः सर्वोऽपि जनो मानवजीवनस्य परमार्थलक्ष्यभूतं धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टयं प्राप्तुमीहते। तत्प्राप्तिश्च साङ्गवेदाध्ययनेनैव सम्भाव्यते। अतः परमेश्वरोऽनिर्वचनीयदुःखतः परिरिरक्षिषयाऽभ्युदयनिःश्रेयसाभ्यां संयुयुक्षया च ब्रह्माणमुत्पाद्य धर्माऽधर्मसाधनोपदेशकं साङ्गं वेदं तस्मै समुपादिशत्। **'यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'**[2] इति श्रुतेः।

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वदता भगवता पतञ्जलिनाऽपि साङ्गं वेदाध्ययनं समर्थितमिति न तिरोहितं विदुषाम्। वेदाङ्गानि तावत्—शिक्षा, व्याकरणम्, छन्दः, ज्योतिषम्, निरुक्तम्, कल्पश्चेति। परमेतेषु मुख्यं व्याकरणमेव। अत एव **'प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः'**[3] इति भर्तृहरिः।

द्विविधो हि शब्दो धर्मजनकोऽधर्मजनकश्च। तत्र धर्मजनकशब्दानां ज्ञानं व्याकरणाधीनम्। तद्यथा—**'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति'** इत्यभियुक्तोक्तिः।[4]

प्रधानञ्च षट्स्वङ्गेषु व्याकरणमिति भाष्योक्त्या, **'पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते'**[5] इति भर्तृहरिणा च साङ्गं वेदमित्यत्राङ्गपदस्योपकारार्थकत्वाद् व्याकरणशास्त्रस्य वेदोपकारकत्वाद् निखिलशास्त्रोपकारकत्वाच्च तज्ज्ञानमावश्यकम्।

यद्यपि—

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥**

इत्यादिना वेदोपकारकाणां समेषामध्ययनमुक्तम्; तथापि व्याकरणस्य मुख्यत्वमत्रापि प्रतिपादितमेव। यथा शरीरावयवेषु मुखस्य प्राधान्यम्, तथैव वेदोपकारकेष्वप्यङ्गेषु व्याकरणस्य प्राधान्यात् तदध्ययनमावश्यकमिति स्वीकृतं विद्वद्भिः।

---

१. संहितोपनिषद्ब्राह्मणम्–३। २. श्वेताश्वतरोपनिषद्–६।१८। ३. वाक्यपदीयम्–१।११।
४. महाभाष्यम्—पस्पशा० पृ० ३६। ५. वाक्यपदीयम्–१।१४।

तत्किं नाम व्याकरणम् ? व्याकृतिः = व्युत्पत्तिः, तत्साधनं व्याकरणम् । अथवा व्याक्रियन्ते = व्युत्पाद्यन्ते असाधुशब्देभ्यो विविच्य शब्दा अनेनेति शब्दज्ञानजनकं व्याकरणम् ? वि + आङ्-उपसर्गकात् √कृधातोः करणल्युडन्तमिदं व्याकरणपदम् । अत्र शब्दपदेन साधुशब्दा एव गृह्यन्ते, न त्वसाधुशब्दाः । तच्च व्याकरणं सूत्रमेव । तल्लक्षणं यथा—

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः**[1] ।। इति ।

अस्मिन् व्याकरणसम्प्रदाये बृहस्पत्यादयोऽनेके वैयाकरणा अभूवन् । तेषां व्याकरणान्यपि ऐन्द्रचान्द्रादीनि-अनेकान्यासन्नित्यवगम्यते भाष्यादिभिः । परमेतेषु लौकिकालौकिकशब्दव्युत्पादकं सर्वव्याकरणनिकषायमाणं पाणिनीयमेव व्याकरणं वेदाङ्गत्वेनोररीकृतं सर्वैः । यथा—

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।**
**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यन्न किञ्चन ।।**

इति पाणिनीयमेव व्याकरणं सर्वोपरि विराजते । यथा—**'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'** इत्यभियुक्तोक्तिः ।

तदेव साधुत्वसम्पादकं पुण्यजननयोग्यताधायकञ्च । साधुत्वञ्च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदकजातिविशेषः । एतदेव च **'एकः शब्दः सम्यग् ज्ञातः.........'**[2] इत्यादिना महाभाष्येऽपि भगवता भाष्यकारेणोक्तम् । यतः पाणिनिव्याकरणमनुत्तमतपस्सन्तोषितमहेश्वरवरप्रसादलब्धचतुर्दशसूत्रमूलकम् । अत एवास्यैव वेदाङ्गत्वम् । 'अ इ उ ण्' इत्यादिचतुर्दशसूत्ररूपवर्णसमाम्नायमुपक्रम्य वेदानां वेद इत्युक्तत्वात् । अत एतेषां पारायणे पुण्यावाप्तिश्च भवति ।

अथेदानीं व्याकरणाध्ययनस्य किं प्रयोजनमित्यत्र किञ्चिद् विचार्यते । शब्दानुशासनं व्याकरणस्यान्वर्थनाम । अनुशिष्यन्ते = अशाधुशब्देभ्यो विविच्य ज्ञाप्यन्ते साधुशब्दा अनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्याच्छब्दानुशासनं नाम शास्त्रम्, तच्च व्याकरणमेवातो व्याकरणाध्ययनस्य शब्दानुशासनमेव साक्षात्प्रयोजनमाह भगवान् महाभाष्यकारः । प्रयोजनप्रयोजनानि वदता महाभाष्यकारेण कानि पुनः शब्दानुशासनस्य प्रयोजनानीति प्रश्ने रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्युक्तम् । व्याकरणाध्ययनं किं सन्ध्योपासनवन्नित्यं कर्म, आहोस्वित् काम्यं कर्मेति प्रश्नः । अत्र प्रयोजनशब्दः प्रयोजकश्च प्रयोजनश्चेति विग्रहे नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नियमेनैकशेषः, यः शिष्यते स लुप्यमानार्थाभिधायीति रीत्या प्रयोजकार्थपरोऽपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किञ्चिदस्ति न वेति प्रश्नाशयः । अत एवात्र प्रयोजनकथनावसर आगमपदोपादानं कृतम् । कर्मणि नित्यत्वञ्च न ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम्, कर्मत्वेन जन्ये सन्ध्यादावव्याप्तेः । नापि दैनिकानुष्ठानविषयत्वम्, तथा सति **'वसन्ते वसन्ते ज्योतिषा यजेत'** इति श्रुत्या वसन्तमात्रानुष्ठानविषये ज्योतिष्टोमयागेऽव्याप्तेः । नापि अनाद्यन्तफलकत्वं तत् ।

---

१. महाभाष्यम्—पस्पशा० पृ० ७ । २. तदेव—पस्पशाह्निकम्–पृ० ३६ ।

परब्रह्मणा सह तन्निष्ठस्पन्दनानुस्यूतध्वनेरभेदसम्बन्धो विद्यते। अत एव याऽहमित्युदिता सा परा वाक्, एवमत्र प्रतिपादितं ध्वनितत्त्वमेव परब्रह्म, परब्रह्मैव ध्वनितत्त्वमित्युभयथा वक्तुं शक्यते। वस्तुतस्तु तद् ब्रह्मस्पन्दनानुस्यूतध्वनितत्त्वविशिष्टमित्येव सत्यम्। स्थावरनामा न कोऽपि पदार्थः। निरतिशयरूपेण स्थिरताया न कुत्रापि लाभः। अतः सर्वत्र निखिलपदार्थजातस्य परमाणुषु स्पन्दनस्य सत्त्वात् तत्र श्रोत्रेन्द्रियातीतो मनसाऽपि गृहीतमक्षमो ध्वनिः सततं प्रस्फुटति। सर्वत्र व्याप्तश्च स ध्वनिरधोक्षजत्त्वात्[1] परेति नाम्नाऽपि व्यपदेष्टुं शक्यते। परमाणुषु स्पन्दनस्य सततं सत्त्वादियं परावाक् सर्वत्र व्याप्ता। रसायनशास्त्रदृष्ट्या भौतिकविज्ञानदृष्ट्या च पराया वाचो व्याप्तिमत्त्वं प्रत्यक्षानुमानाभ्यामित्थमेव व्याख्यातुं शक्यते।

सा परावागेव विश्वभाषाया जनयित्री, सर्वेषामर्थानाञ्च निर्मात्री। तथा चोक्तम्—**'वागेव विश्वा भुवनानि यज्ञे'** इति।

इयं श्रुतिः रसायनशास्त्रस्य यद्वा भौतिकशास्त्रस्य पद्धत्या व्याख्यातुं शक्यते।

ध्वनिद्वारा पदार्थो निर्मातुं शक्यते—इत्याधुनिकध्वनिशास्त्रेषु पुष्कलरूपेण प्रक्रियात्मकं व्याख्यानं दृश्यते। पराश्रव्यध्वनीनां [2]रासायनिकोपयोगेऽतिशयं महत्त्वं प्रोक्तम्।

पराश्रव्यध्वनिद्वारा बृहदणुः परमाणुरूपेण परिवर्तते। अमेरिकादेशे[3] पराध्वनिक-इमेजिङ्ग-प्रणाली प्रचलिता। अनया प्रणाल्या पराध्वनिद्वारा अक्षिगताः सर्वे रोगा द्रष्टुं शक्यन्ते, ये पराध्वनिद्वारा अक्षिगतानां रोगाणां चित्रनिर्माणमेव पराध्वनिक-इमेजिङ्गप्रणाल्या कार्यकलापः। एवं वाचो विश्वप्रसूत्वं नूतनविज्ञानदृष्ट्या विश्वसनीयं जायते। पराया वाचो विश्वव्यापित्वं

---

१. अधःकृतमिन्द्रियजन्यज्ञानं येन यस्य वेति साऽधोक्षजः।

२. पराशब्द तरङ्ग की क्षमता—

पराशब्द ध्वनि की क्षमता शब्दध्वनि की अपेक्षा बहुत अधिक होती है, जिससे अनेक प्रकार की रासायनिक, जैविक, यान्त्रिक आदि क्रियाएँ सम्पन्न होती हैं। श्री ललितकिशोर सिंह, एम्० एस्० सी० कृत ध्वनिविज्ञान, पृ० सं० २३१। अयं ग्रन्थः काशीहिन्दू विश्वविद्यालय-वाराणसीद्वारा प्रकाशितः।

रासायनिक पोटैशियम आयोडाइड (KI) के घोल में या हाइड्रोजन सल्फाइड ($H_2S$) में पराश्रव्य ध्वनि का सञ्चार होने से इन यौगिकों में से और एस अलग हो जाते हैं। यह प्रक्रिया आक्सीकरण की है। पराशब्द ध्वनि से उल्टी क्रिया भी होती है, जिसे लघुकरण रिडक्सन कहते हैं। जैसे मर्क्यूरिक क्लोराइड (Mercuric chloride) का मर्क्यूरस क्लोराइड (Mercurous chloride) में बदल जाना। श्री ललितकिशोर सिंह, एम्० एस्० सी० कृत ध्वनिविज्ञान, पृ० सं० २३२।

३. आज वाराणसी, १० जनवरी १९८० समाचारपत्र।

तीसरी आँख ध्वनि के माध्यम से देखिये—इत्यंशो दृष्टव्यः।

विश्वप्रसूत्वञ्च भाषाविज्ञानदृष्ट्या व्याख्यातुं न शक्यते। यतो हि भाषाविज्ञानं खलु भाषायाः सामान्यरूपमेव व्याचष्टे[1]।

नूतनपदार्थानां निर्माता रासायनिक इव पदार्थं निर्मातुं न शक्नोति।

यदि परावाक् सर्वत्र व्याप्ता, तर्हि प्रत्येकपदार्थस्य सर्वेषु परमाणुषु सततं स्पन्दनं जायत इत्याधुनिकं मतं भारतीयैर्दार्शनिकैः सहृदयैः स्वीकर्तव्यम्। यतो हि यत्र परिस्पन्दनं तत्र ध्वनिः, यद् वा यत्र ध्वनिस्तत्र परिस्पन्दनमवश्यमेव जायते; ध्वनिस्पन्दनयोः साहचर्यस्य नित्यत्वात्। अथ च यदाधुनिकैः पराश्रव्यध्वनीनां रासायनिकोपयोगः स्वीक्रियते, पराश्रव्यध्वनीनां प्रयोगश्च विभिन्नपदार्थानां निर्माणे क्रियते, तर्हि **'वागेव विश्वा भुवनानि जज्ञे'** इतीदं परमप्राचीनं भारतीयं मतं तैरपि वैज्ञानिकैः सहृदयैः स्वीकरणीयं विश्वसनीयञ्च। तथा च–**'भूरिति व्याहरत, भूमिमसृजत'** इत्यादिवचनं मृषा, अस्मदुच्चरितशब्दात् पृथ्व्युत्पत्त्यदर्शनात्। एवं प्रत्यक्षप्रमाणीकृतानुमानेन शब्दद्वारा जगत्सृष्टावविश्वासो नार्हः। यदा तानसेनो दीपकरागमगायत्, तदाग्नेः प्रज्वलनं जातम्। अस्माभिरपि सैव गीतिर्गीयते; किन्तु तथा न दृश्यते इत्यादिस्थलेषु पूर्वोक्तपदार्थनिर्माणानुमानस्य बाधो न चिन्त्यः। यतः साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च साधुतया ये समुपासितवन्तः, तेष्वेव शब्दद्वारा सृष्टिकर्तुः प्रजापतेरंशः प्रचुररूपेण विद्यते। यमर्थं प्रवदन्ति, सोऽर्थस्तद्वचनमनुसरति। तथा चोक्तमुत्तररामचरिते भवभूतिना—

**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति।** इति।

सर्वत्र परमाणुषु विद्युद् विद्यते, सर्वत्र विद्युति विद्यमानायामपि नहि खलु कश्चिद् अवैज्ञानिकः परमाणुभ्यो विद्युतं प्रादुर्भावयितुं समर्थः, किन्तु कश्चिद् वैज्ञानिक एव वैज्ञानिकप्रक्रियया तथा कर्तुं समर्थः। एवं सर्वत्र ध्वनिषु सर्वविधशक्तौ विद्यमानायामपि नहि तां शक्तिमुद्बोधयितुं सक्षमाः सर्वे, अपि तु कश्चिद् विधिज्ञः समुपलब्धमन्त्रवीर्यात्मा एवेति।

यथा पदार्थानां प्रत्येकं परमाणवो विद्युत्परिवेष्टिताः; एवं ध्वनीनामपि परमाणवो विद्युन्मयाः। यथा पार्थिवादिपदार्थानां परमाणवः, एवमकारादिध्वनीनामपि। यथा पृथिव्याः परमाणवः पार्थिवाः, एवमकारादिध्वनीनामपि परमाणवो ध्वनिमयाः। अकारादिध्वनीनां यो हि सूक्ष्मतमं ध्वनिमयं स्वरूपम्। स एव तेषां परमाणुः। तदुक्तं शिवमहिम्नः स्तोत्रे—

**त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-**
**नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृतिः ॥**
**तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः**
**समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥**

---

१. The Linguistic can simply define linguistic forms and the their approximate meaning. But he can not do the work of the chemist, Physicist, anthropolosist.
Robert a hall J. R.–Linguistic and your Language P. N. 133.

अत्र स्तुतावणुभिर्ध्वनिभिरित्युक्तम् । अकारादिध्वनीनां ध्वनिमयाः परमाणवो भवन्तीति प्रमाणीक्रियते । यथा जलेषु विद्यमानमपि विद्युत्तत्त्वं नावभासते, काष्ठादिषु विद्यमानेनापि अग्नितत्त्वेन भोजनादिकार्यमसम्भवम्, अनुद्बुद्धत्वात् । वैज्ञानिकविधिद्वारा यत्ने कृते जलस्थो बिन्दुरभिव्यज्यते । एवमकाराद्यक्षरेष्वपि विद्यमानमपि विद्युत्तत्त्वं नावभासते, तपसा यत्ने कृते सति मन्त्रध्वनिनिष्ठा विद्युत् शक्तिरूपेणाभिव्यक्ता सती लोकोत्तराणि कार्याणि करोति ।

एकोनषष्टितमे ईस्वीये हंसराजाख्यो वैज्ञानिकः कस्यचिद् यन्त्रस्य (वायरलेस लाइट इत्याख्यस्य) गवेषणां कृतवान्, तस्मिन् यन्त्रे विद्युत्सम्बन्धी न कोऽपि तन्तुरासीत् । यदा स वैज्ञानिको लाइट इति ध्वनिमुच्चारयति स्म, तदा प्रकाशोऽभवत्[1] । किञ्चाकारादिध्वनीना-मुपादानभूतस्य प्रणवस्यापरं नाम वैद्युतमिति स्कन्दपुराणे श्रीवैष्णवसंहितायां प्रणवकल्पे उद्गीथस्य षोडश नामानि प्रोक्तानि । तद्यथा—

ऊंकारः प्रणवोऽनन्तः सर्वव्यापी च तारकम् ।
शुक्लं सूक्ष्मं वैद्युतञ्च परं ब्रह्म तथैव च ।। २ ।
एकश्चैकरुद्रेश ईशानो भगवांस्तथा ।
महेश्वरो महादेवः प्रत्यगात्मा तथैव च ।। ३ ।

अत्र प्रमाणपुरःसरं समुद्धृते द्वितीयश्लोके वैद्युतमिति प्रोक्तम् । वैद्युतमित्यस्य विद्युत्-स्वरूपमित्यर्थः । ऊमित्यन्तर्नादात्मकस्य प्रणवस्य विद्युत्स्वरूपत्वे तद्रश्मिभूता अकारादिध्वनयोऽपि विद्युन्मयाः, कार्याणामुपादानाभिन्नगुणकत्वात् । 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इत्यादिवाक्येन प्रणवद्वारा या परमात्मप्राप्तिरुक्ता, सा प्रणवनिष्ठविद्युद्द्वारैव सम्पद्यते ।



१. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य–अनुसन्धानसंस्थानसञ्चालकः–अत्र प्रमाणभूतः ।

# भाषाविज्ञानदृष्ट्यार्थविकासः

डॉ० शारदाचतुर्वेदी

**प्राध्यापिका, भाषाविज्ञानविभागस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

लक्ष्यलक्षणसमुदितं व्याकरणं भवति । व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येनेति व्याकरणम् । अर्थपरिज्ञानमेव हि वाच्यं फलम्, अन्यथा फलसंस्कारादयः सर्वथा निरर्थकाः स्युः । **'इन्द्रशत्रुर्विवर्धस्व'** इत्यत्रैक एव 'इन्द्रशत्रुः'शब्दः पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वेन च भिन्नार्थं स्फुटमभिधत्ते । स्वरवशाच्छब्दोऽन्यथोच्चार्यमाणोऽर्थभेदं जनयति । वाग्वज्र इव प्रयोगकर्तारमेव हन्ति । सम्यगर्थावबोधनार्थमेव व्याकरणाध्ययनमपरिहार्यम् । **'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह'** इत्यर्थविषये प्रामाणिकोक्तिर्वर्तते । वाणी यदि सम्यक् प्रयुक्ता तदाऽपेक्षितं प्रसूते, कामधेनुरिव यदि वाणी दुष्प्रयुक्ता, तदा नाभीष्टमर्थं प्रसूते, अपि तु प्रयोक्तुर्वृषत्वमपि व्यनक्ति । यथा—

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ।।** इति ।

निरुक्ते ह्यर्थवशाद् व्युत्पत्तिः स्वीक्रियते । व्याकरणे प्रकृतेः प्रत्ययस्य चार्थबोधनादनायासमेव शब्दार्थावगम्यते ।

इदानीमेष विचारो भाषावैज्ञानिकदृष्ट्या पदमनुलभते यद् निष्पन्नशब्दमादाय धातुविचारः सर्वथा निष्प्रयोजनः । यत्प्रयोगे यदर्थं प्रतीयते तत्तदर्थः स्यात् । यथा पृथ्वीति चिरपरिचितः शब्दः । कश्चित् पृथ्वीशब्दं प्रयुङ्क्ते, तेन च प्रसिद्धोऽर्थोऽवगम्यते । का आवश्यकतेदानीं प्रथनात् पृथिवी इति कथनस्य ? प्रथनसम्बन्धविनाऽपि पृथ्वीशब्देन स एवार्थोऽवगतो भवति । किञ्च, पुनरपरः प्रश्न इहैव पदमनुलभते । आसीत् पृथिवी, प्रथनाच्च पृथ्वी, केन चास्याः प्रथनं कृतम्, कमाधृत्य ? अत्रैव च वैयाकरणा विप्रतिपद्यन्ते । कश्चित् कथयति धातुजः पृथ्वीशब्दः, किन्त्वालीकैव प्रथनक्रियेति, पृथ्वीशब्दो न धातुजः । अत्र शाकटायनस्तदानुलोमिकसाम्प्रदायिकाश्च कथयन्ति—नाम्नः प्रथमं परिनिष्पत्तिर्न भवेत्, तदा प्रकृतिप्रत्ययपर्येषणा वृथैव । पृथुत्वं प्रत्यक्षसिद्धमवलोक्य यदि प्रथनात् 'पृथ्वी' इत्युच्यते, तदा दृष्टिहानिरपि स्यात् । व्युत्पत्त्यनन्तरमेव तु वक्तुं शक्यते—

**शब्देनोच्चार्यमाणेन यद्वस्तु प्रतिपद्यते ।**
**तस्य शब्दस्य तद् वस्तु ज्ञायतामर्थसंज्ञया ।।**

यत्र शब्दो नानुगच्छत्यर्थम्, तद् धातुजत्वरक्षणार्थं निरुक्तरीतिमवलम्ब्य पदांशग्रहणपूर्वकमलौकिकैरुपायैः शब्दा व्युत्पाद्यन्ते । यथा गृह्यतां सत्यशब्दः । विद्यमानार्थज्ञानजनकः सत्यशब्दः । अत्र च सत्यपदे 'सत्-य' इति द्विधा विभज्य अस्धातुसिद्धः सत्-शब्दः । एवं ज्ञानार्थकाद् इन-

धातोर्व्यन्तरूपादाययतिपदाद् यकारं परिगृह्य सत्यशब्दं निष्पादयति । अर्थानुगामित्वसम्पादनार्थमेतादृशी व्युत्पत्तिरङ्गीकृता शाकटायनेन ।

एवमेव प्रामाणिकपदनिर्वचनकाल एषा पद्धतिरङ्गीकृता नैरुक्तसमयविद्भिः । अग्निशब्दव्युत्पत्तिप्रदर्शनावसरे कथयति गमनक्रियाशीलः रूपप्रकाशकः पार्थिववस्तुदाहकारी । एवं देवोद्देशेन हवनीयद्रव्यवहनकारी अग्निरीति वर्णविकारप्रक्रियामनुसृत्य गत्यर्थकस्य इन-धातोरकारम्, प्रकाशार्थकस्य अञ्जधातोर्दहनार्थकस्य दहधातोर्वा गकारः, प्रापणार्थकस्य नीधातोर्निकारमादायाग्निशब्दसंस्कारः प्रदर्शितः । यत उक्तधातुत्रयवाच्या क्रिया 'अग्नौ' उपलभ्यत इत्यर्थमनुरुद्धय संस्कारस्तदर्थप्रकाशने समीचीनतामावहति । अर्थस्य प्राधान्यं प्रदर्शयता शाकटायनेनोक्तं प्रथमं वस्त्वनन्तरं क्रियोत्पद्यते । यतः क्रिया द्रव्याश्रिता । तथा चोत्तरकालेन भाविन्या क्रियया वस्तुनो नाम भवति, किन्तु वस्तुस्वभूतमेवान्यथाशब्दार्थसम्बन्धस्यानित्यत्वं स्यात् । लोकव्यवहारेऽप्यजातपुत्रस्य नामकरणे यत्नो न भवतीति सकलस्य शब्दस्य धातुजत्वं नास्ति । परन्तु परभाविन्या क्रियया नामकरणप्रथा दृश्यते । यथा नवागतः कश्चित् शिशुर्लम्बचूडकनाम्नोच्यते । भाविनीभूतवदुपचार इति न्यायं श्रुतिरपि वदति । 'पुरोडाशकपालेन तुषान् अपनयति' इत्यत्र भविष्यत्पुरोडाशस्य सम्बन्धानुसारं कपालविशेषस्य पुरोडाशकपालमित्युच्यते । तस्मादर्थानुरोधेन व्युत्पत्तिः करणीया, अर्थश्च शब्देन कथं व्यवहारवृत्त्या विद्यत इत्यस्य दिग्दर्शनं भाषावैज्ञानिकप्रणालीमनुसृत्य प्रस्तूयते ।

**भाषाविज्ञानदृष्ट्यार्थविकासः**

अर्थादेशस्यार्थविस्तारस्य वा विषये भर्तृहरिणोक्तं क्वचिद् गुणप्रधानताविपर्ययं पदार्थैकदेशाविवक्षां सकलपदार्थाविवक्षाम् उपात्तपदार्थपरित्यागं विनैवान्यार्थबोधकः शब्दो भवति । तथा ह्युक्तम्—

क्वचिद् गुणप्रधानत्वमर्थानां विवक्षितम् ।
क्वचित् सान्निध्यमप्येषां प्रतिपत्तावकारणम् ॥
यच्चानुपात्तं शब्देन तत् कस्मिंश्चित् प्रतीयते ।
क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम्[1] ॥

यथा प्रकाशो घटादिप्रकाशनाय प्रवृत्तो भवति, परन्तु घटेन सह सामीप्यादिवशाद् अन्यार्थप्रकाशकोऽपि भवति, तथैव यस्मिन्नर्थे शब्दः प्रयुक्तो भवति, तत्साहचर्यवशाद् अन्यार्थप्रकाशकोऽपि जायते । भवति मुख्यार्थप्रकाशको शब्दः, किन्तु सान्निध्यवशादविवक्षितस्याप्यर्थस्य प्रकाशको भवति ।

संसर्गेषु तथाऽर्थेषु शब्दो येन प्रयुज्यते ।
तस्मात् प्रयोजकादन्यानपि प्रत्याययत्यसौ[2] ॥

---

१. वा० प० २।३०४-५; २. तदेव—२।२९९ ।

अर्थविस्तारार्थं भर्तृहरिणा पतञ्जलिना च निम्नलिखितः प्रकारः प्रदर्शितः—**'विशेषस्याविवक्षितत्वात् सामान्यस्य च विवक्षितत्वात् सिद्धम्'**[1], **'कौशलं त्वस्य प्रवृत्तिनिमित्तम्। तेन वीणायां प्रवीण इत्यपि भवति'**[2] इति।

कुशलशब्दः स्वमुख्यार्थं परित्यज्यार्थविस्तारभयात् कौशलार्थबोधकः संवृत्तः, न तु इदानीं कुशछेदनार्थबोधको भवति। **'संप्रदोश्च कटच्'**[3] इत्येतत्सूत्रव्याख्यानावसरे पतञ्जलिकैयटावपि व्याख्यादिष्वर्थविस्तारोदाहरणानि प्रदर्शितानि। यथा गोष्ठशब्दो गवां स्थितिस्थानमिदानीं निवासस्थानार्थबोधकः संवृत्तः। कात्यायनेनोक्तम्—**'गोष्ठातच् स्थानादिषु पशुनामादिभ्यः'** इति। यथा 'अभिगोष्ठम्, गोगोष्ठम्' इत्यादि। एवमेव गोयुगशब्दार्थः 'गवां युग्मम्' परन्तु सामान्यवचनतयेदानीमेष शब्दो युगमार्थबोधकः संवृत्तः। यथा उष्ट्रगोयुगम्, खरगोयुगम्, गर्दभगोयुगम्। उक्तश्च कात्यायनेन—**'द्वित्वे गोयुगच्'** इति। एवमेव तैलशब्दस्य मुख्यार्थः तिलस्निग्धभागः, किन्तु तिलशब्दो मुख्यार्थं परित्यज्य सामान्यवचनतया केवलं द्रवार्थबोधकः। अत एव कात्यायनेन **'स्नेहने तैलं च'** इत्यनेन वार्तिकेन स्नेहापरपर्याये तैलशब्दप्रयोगं कृतवान्। अथैतेन सर्षपतैलम्, इङ्गुदितैलम्, तिलतैलमित्यादिप्रयोगाः सङ्गच्छन्ते।

पुङ्गवशब्दः, वृषभशब्दः, ऋषभशब्दश्च वृषभार्थबोधकः, किन्तु श्रेष्ठत्वोत्कृष्टत्वगुणसामान्यवाचका इदानीं श्रेष्ठार्थे प्रयुक्ता भवन्ति। अत एव 'भरतर्षभः', 'नरपुंगवः' इत्यादयः प्रयोगाः सङ्गच्छन्ते। लक्षणावशादपि मुख्यार्थं परित्यज्य शब्दोऽन्यार्थबोधको भवति। यथा **'काकेभ्यो दधि रक्षत'** अत्र काकशब्दः सकलदध्युपघातकार्थबोधको भवति। एवमेव सन्ति बहवः प्रयोगा यत्रार्थविस्तार उपलभ्यते।

अर्थसमष्टिषु यदि कश्चिदर्थः प्राधान्यं भजते, तदाऽन्येऽर्थाः क्रमशः क्षीणभूताः सन्तो विलुप्ता भवन्ति। यथा प्रदीपशब्दः साधारणदीप आलोको वा भवति, किन्तु बङ्गभाषायां विशेषाकारसम्पन्ने तैलदाह्यदीपे प्रयुक्तो भवति। जनशब्दो मनुष्यापरपर्याय इदानीं दिवाकाले अर्थमादाय कार्यसम्पादके मनुष्य एव प्रयुक्तो भवति।

**अर्थसङ्कोचः**

निरुक्तेऽर्थसङ्कोचविषय एवमुक्तम्। नशब्दो निषेधार्थे, उपमायाञ्च, किन्त्विदानीं निषेधार्थक एव संवृत्तः। **'नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायाम्'**[4] इति।

एवमेव बहूनां नानार्थबोधकशब्दानामर्थसङ्कोचः सञ्जातः। यथा गोशब्दः सूर्यपृथिवीकिरणाद्यर्थवाचक इदानीं गवार्थवाचक एव सञ्जातः। रजतशब्दो जललोकज्योतिरादिवाचक इदानीं सङ्कुचितार्थवाचकः। एवमेवार्कशब्दः, पवित्रशब्दः, अरिशब्दादयश्च। ब्राह्मणग्रन्थाध्ययनेनाप्यनुगम्यते यद् बह्वर्थबोधकाः शब्दाः संकुचितार्थबोधकाः सञ्जाताः। यथा अग्न्यादिशब्दा बह्वर्थबोधकाः संकुचितार्थबोधकाः सञ्जाताः। शतपथब्राह्मणे पशुशब्दो मनुष्यार्थबोधक आसीत्,

---

१. म० भाष्य० १।२।६८। २. तदेव—५।२।३९।
३. अष्टा० ५।२।२९। ४. निरुक्तम्—१।४।

किन्त्विदानीं संकुचितार्थः संवृत्तः । महाभाष्यव्याख्यानावसरे कैयटेनोक्तम्—'सर्वार्थाभिधान-शक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते, तदा तत्रैव प्रतीतिं जनयति, नान्यत्र' । एवमेव नागेशेनोक्तम्—'रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रयते गच्छतीति गौरिति । तेन गमनक्रियारहितोऽपि गौर्भवति, गोपिण्डाच्चान्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति' इति ।

हेलाराजेनापि वाक्यपदीयव्याख्यान उक्तम्—'रूढत्वाच्च लौकिकस्यार्थस्य प्रक्षरणमात्राद् न्यग्रोधः प्लक्षो नोच्यते, न हि गमनाद् गौरिति पुरुषोऽपि गौरित्यभिधीयते'[1] इति ।

आचार्यविश्वनाथेनाप्युक्तम्—'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्ति-निमित्तम्'[2] इति ।

नागेशेन परिभाषेन्दुशेखर एतदर्थप्रतिपादिका परिभाषाऽपि संगृहीता—'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी'[3] इति ।

अर्थसंकोचप्रकारश्च व्याकरणे बहुधा प्रपञ्चितः । यथा पतञ्जलिनोक्तम्—'सर्वश्च शब्दोऽन्येन शब्देनाभिसंबध्य मार्गविशेषावयवः सम्पद्यते'[4] इति ।

अन्यत्रापि—'युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः । बाढं युक्तम् । अन्यत्रापि नियतविषयाः शब्दा दृश्यन्ते'[5] इति ।

उपसर्गयोगाच्च धातोरर्थान्तरबोधकता 'प्रहाराहारसंहारविहारपरिहारवत्' प्रसिद्धैव । एवमेव महाभाष्ये बहून्युदाहरणान्यर्थसंकोचस्य प्रदर्शितानि ।

**अर्थसंश्लेषः**

अर्थस्य क्रमान्वितप्रसारस्य संकोचस्य च परिणामाद् मध्यवर्ती अर्थः लुप्तः सन् कस्यचिद् अर्थविशेषस्य बोधको भवति । यथा सहसा, हठात्—एतच्छब्दद्वयं वर्तते । तत्रानयोर्मौलिकार्थः सबल इत्याद्यासीत् । इदानीं सर्वथा एषोऽर्थः परित्यक्तः । सम्प्रति चिन्ताहीनताया अविमृश्य-कारितायाश्च भावो व्यक्तो भवति । कदाचिद् वाक्यमेवार्थपरिवर्तनं कृत्वा शब्दरूपे परिणतो भवति । यथा nonpar इति लेटिनशब्दस्याङ्ग्लभाषायाम् 'अम्पायर' इत्यर्थो भवति ।

शब्दोऽर्थदृष्ट्या त्रिधा विभक्तो भवति । तद्यथा—

१. प्रत्यक्षक्रियः,

२. प्रकल्प्यक्रियः,

३. विद्यमानक्रियश्च ।

प्रत्यक्षक्रियेषु शब्देषु क्रियाया धातोर्वा साक्षादुपलब्धिर्भवति । यथा—हारकः, पाचकः, कर्ता इत्यादिशब्देषु । प्रकल्प्यक्रियेषु शब्देषु साक्षाद्रूपेण क्रियाया धातोर्वा उपलब्धिर्न भवति, अपि त्वनुमानेन कल्पनेन वा तत्प्रतीतिर्जायते । यथा—गो-अश्वादिशब्देषु ।

---

१. वा० प० ३, पृ० ४६५ । २. सा० द० २।५ । ३. परिभाषेन्दुशेखरः–१०७ ।
४. म० भाष्यम्–२।१।५५ । ५. तदेव–२।२।२९ ।

अविद्यमानक्रियेषु शब्देष्वनुमानादिनाऽप्युपलब्धिर्न भवति। यथा—अरविन्दादिशब्देषु। यौगिकशब्देषु क्रियायाः सहजोपलब्धिः। रूढिशब्देषु स्वरसंस्कारो नोपलभ्यते प्राधान्येन। निघण्टुशब्दव्याख्यायां यास्केनोक्तम्—**निघण्टवः कस्माद् निगमा इमे भवन्ति, निगन्त्व एव सन्तो निगमनान् निघण्टवः, अपि वाहननादेषु समाहता भवन्ति यद् वा समाहृता भवन्ति।'** अत्र प्रत्यक्षक्रियः प्रकल्प्यक्रियः परोक्षक्रियश्च स्पष्टमुद्घोषितः।

यास्कमतेन निर्वचनवशात् कस्यापि शब्दस्यार्थो निश्चितो भवति। सर्वस्य प्रातिपदिकस्य धातुजत्वे तत्र क्रिया भाव्यम्। अतस्त्रिधा व्युत्पत्तिषु काचिदेका अर्थसापेक्षाऽऽवश्यकी। अर्थमनुरुद्धय तत्र निर्वचनं भवति। अनन्तरं निर्वचनस्यार्थे समन्वयः साधु संगच्छते। अनयाऽपि रीत्याऽर्थविकासस्योपरि निरुक्तकारस्य दृष्टिवर्तते, यथा गोशब्दार्थविवेचनवेलायां पृथ्वी गमनशीलतया गोशब्दाभिधेया भवति; परन्त्वर्थसमन्वयाद् गमनशीलत्वसाधर्म्याद् गौरपि गोशब्देनाभिधीयते। निर्वचनलभ्यार्थसाधर्म्याद् गोशब्दो वाण्यादिषु प्रयुक्तो भवति। अयमर्थविकासः शब्दार्थनिर्वचनभावमाकलय्य भवति। एवमेव निर्वचनात्मकार्थवशाद् नानार्थकोऽपि शब्दोऽर्थसङ्कोचं विधाय संकुचितेऽर्थे प्रयुक्तो जायते। यथा यास्कस्तक्षणक्रियामाधारीकृत्य तक्षा इति प्रयुङ्क्ते; किन्तु प्रतिमार्गं गच्छन् अश्वो न तक्षाशब्दव्यपदेशभाग् भवति। अत्र कारणं प्रदर्शयता यास्केनोक्तं यल्लोकव्यवहारवशाद् निर्वचनात्मकार्थमवलम्ब्य न सर्वत्रैतत्क्रियासाधर्म्यात् प्रयोगो भवति[1]।

यत्र शब्दः स्वमुख्यार्थं स्वाभाविकं वाऽर्थं परित्यज्यान्यार्थे प्रयुक्तो भवति, तदाऽर्थादेशसंज्ञया तस्य व्यवहारो भवति। अत्रार्थसङ्कोचोऽर्थविस्तारश्चैतस्यैवार्थादेशनाम्ना व्यवहारः। **'शालीनकौपीने अधृष्टाकार्ययोः[2]'** एतस्य सूत्रस्य व्याख्यानावसरे पतञ्जलिनोक्तं कौपीनशब्दार्थः—अकार्यो दुष्कर्मो वा भवति। अस्य सम्बन्धः कूपपतनयोग्यकार्ये कृतः। किन्त्वयं शब्दः कूपार्थसम्बन्धम् अकार्यार्थञ्च परित्यज्य कौपीननामके वस्त्रे प्रयुक्तो भवति। एतस्य सूत्रस्य व्याख्यानावसर आचार्यः कैयटोऽर्थादेशविवरणमपि दत्तवान्।

एवमेव भ्रातृव्यशब्दस्य मुख्योऽर्थो भ्रातृपुत्रो भवति, परं **'व्यन्सपत्ने[3]'** एतस्य सूत्रस्य भाष्यावसरे भाष्यकृतोक्तं यद् भ्रातृव्यशब्दोऽपत्यार्थं परित्यज्य शत्रौ प्रयुक्तो भवति। कैयटेनैतस्य व्याख्यानावसरे निभालितं यत्—**'नैष नियमो यद् भ्रातृव्यशब्दः शत्रुमात्रार्थे प्रयुक्तो भवति'**, यतः सर्वे शत्रवो भ्रातृपुत्राः स्युरिति वक्तुं न शक्यते। परन्तु भ्रातृव्यशब्दः स्वार्थं परित्यज्यान्यार्थबोधकः सञ्जात एव। एवमेव मण्डपशब्दः, लावण्यशब्दः, प्रतिकूलशब्दः, अनुकूलशब्दश्च। सपत्नशब्दस्य प्रयोगः पाणिनापि स्वीकृतः। यद्यपि काशिकाकार एतस्य शब्दस्य सपत्नशब्देन सम्बन्धमुक्त्वाऽनन्तरं सपत्नसम्बन्धं परित्यज्य शत्रावेतस्य शब्दस्य प्रयोगो मा वा भवतु **'असौ सपत्नः सम्बन्धः शत्र्वर्थबोधकः[4]'** इति।

---

१. नि० १।१४ महाभाष्येऽपि मूढार्थे प्रयोगविषये एष एव पन्था भाष्यकारेणापि समर्थितः 'युक्तं पुनर्यद् नियतविषया नाम शब्दाः स्युः। बाढं युक्तम्। अन्यत्रापि तदविषयदर्शनात्' (म० भा० २।२।२९)।

२. अष्टा० ५।२।२०; ३. तदेव—४।१।१४५; ४. काशिका—४।१।१४५।

अर्थादेशः

पतञ्जलिना क्रान्तदर्शितत्वाद्यर्थे कविशब्दप्रयोगः कृतः 'ता जातिं कवयो विदुः'[१] इति। किन्तु संस्कृते इदानीं पद्यरचयिता कविशब्दवाच्यो भवति। मृगशब्दः पशुमात्रार्थबोधक आसीत् 'मृगो न भीमः कुचरो गिरिष्ठाः'[२] इति। वाल्मीकिरामायणे सिंहार्थे मृगशब्दप्रयोगः। इदानीं मृगशब्दार्थो हरिणः। एवमेव बहवः शब्दा अर्थविकासस्योदाहरणभूताः सन्ति। दिङ्मात्रमेव दर्शितम्। भर्तृहरिणा त्वर्थविकासे प्रतीत्याधीनत्वात् कारणता प्रतिपादिता। एक एव शब्दो व्यक्तिभेदवशात् कालभेदवशाच्चार्थान्तरं प्रकाशयेत्। अनया दृष्टचैतत् स्पष्टमेव यच्छब्दो न कस्यापि निहितस्यार्थस्यैव बोधकः, अपि तु वासनावशाद् अनुभववशाच्चानुभूयार्थतत्त्वं निश्चिनोति।

प्रतिनियतवासनावशेनैव प्रतिनियताकारोऽर्थस्तत्त्वतस्तु कश्चिदपि नियतो नाभिधीयते।

यथेन्द्रियं सन्निपतद्वैचित्र्येणोपदर्शकम्।
तथैव शब्दादर्थस्य प्रतिपत्ति नेकधा ॥[३] इति।

एतस्माद् नास्ति नैकः कश्चिदेकः शब्दस्यार्थः। महाभाष्ये प्रदीपे कैयटेनापि स्पष्टमुद्घोषितं यत् कस्यापि शब्दस्यार्थः सर्वथा निर्धारितो नास्ति। तथा च कैयटः—'अनन्तत्वात् प्रयोगविषयस्यावधारणस्य कर्तुमशक्यत्वात्[४]' इति।

हेलाराजोऽपि कथयति—'विवक्षोपगूढो ह्यर्थः शब्दानाम्'।

वस्तुतोऽर्थबोधः प्रतिभानुरूपी भवति। प्रतिभावशादेवार्थग्रहणं भवति। प्रतिभा च न समाना, तीव्रमन्दतारतम्यात्। प्रतिभावशादेवार्थावगतिर्भवति। सूक्ष्मतत्त्वावगतिरपि प्रतिभाधीना। सत्यमेवोक्तं भर्तृहरिणा—

अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः।
बालानां च तिरश्चां च यथार्थप्रतिपादने[५] ॥ इति।
एकस्यापि च शब्दस्य निमित्तैरव्यवस्थितैः।
एकेन बहुभिश्चार्थो बहुधा परिकल्प्यते[६] ॥

अर्थविकासक्रमे वैयाकरणैरुक्तं शब्दस्यार्थो वस्तुसान्निध्याद् भिन्नरूपेणाभिव्यक्तो भवति। यथा जपाकुसुमसन्निधिं प्राप्य स्फटिकस्तद्रूपतामाधत्ते, अतो नास्ति सन्देहो यच्छब्दार्थ औपचारिकसत्तायुक्तो भवति[७]।

---

१. महाभाष्यम्—४।१।६३।
२. ऋ० सं० १०।१८०।२।
३. वा० प० २।१६३।
४. महाभाष्यम्—प्रदीपः—५।१।१।
५. वा० प० २।११७।
६. वाक्य २।१३७।
७. महाभाष्ये-उद्द्योतः—१।२।४५।

भाष्यव्याख्यानावसरे नागेश इममेवार्थमप्रकाशयत्—सामान्यशब्दश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्वेव तिष्ठन्ते। प्रकरणादिसापेक्षतयाऽर्थप्रत्यायकत्वं सामान्यशब्दत्वम्[1]' इति।

एवमेव बह्वर्थबोधकः शब्दः संयोगादिभिर्नियन्त्रितो विशिष्टवाच्यार्थबोधको भवति। यथा—

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः[2]॥**

वाक्यपदीयेऽर्थप्रतीत्यर्थमेष पन्थाः प्रदर्शितः—

**वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः।**
**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥**
**संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थप्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः[3]॥ इति।**

अयमर्थः—'संसर्गः' इति लक्ष्यपरम्। यत्रानेकार्थबोधकाः शब्दाः सन्ति, तत्र सम्बन्धवशादर्थविशेषस्य नियन्त्रणं भवति। यथा—'सशंखचक्रो हरिः' इत्यत्र यद्यपि हरिशब्द इन्दुमर्कटाच्युताद्यनेकार्थबोधकः, तावताऽपि विष्णावेव नियमनं भवति। यतः शंखचक्रयोर्धारणं विष्णावेव सिद्धम्। इन्द्रादीनां शंखचक्रधारणं न प्रसिद्धम्। एवमेवाशंखचक्रो हरिर्विप्रयोगादपि शक्यार्थस्य नियमनं भवति, यतो विभागः संयोगपूर्वक एव प्रसिद्धः। रामलक्ष्मणावित्यत्र लक्ष्मणमाश्चर्यवशाद् रामशब्दो दशरथापत्यार्थबोधक एव भवति। रामार्जुनावित्यत्र वध्यघातकभावरूपविरोधाय रामपदस्य भार्गवे, अर्जुनपदस्य च कार्तवीर्ये अभिधानियमनं भवति। **'स्थाणुं भज भवच्छिदे'** इत्यादिप्रयोगेषु स्थानपदस्य महादेवे शक्तिनियमनं भवति, भवच्छेदनरूपप्रयोजनवशाद्। न हि काष्ठस्य भजनेन संसारोच्छित्तिः सम्भवति। भवच्छेदो महादेवभजनस्य कार्यम्।

प्रकरणवशादेव शक्तिनियमनं भवति। यथा—**'सर्वं जानाति देवः'** इत्यत्र देवशब्दः प्रकरणवशाद् राजार्थबोधको भवति। वक्तुः श्रोतुश्च बुद्धौ भासमानं देशकालपात्रादिकमेव प्रकरणशब्दार्थः। लिङ्गवशादपि नानार्थबोधकपदानामेकशब्दार्थबोधकत्वम्। **'कुपितो मकरध्वज.'** इत्यत्र कोपो मकरध्वजपदस्य कन्दर्पे एव शक्तिं नियमयति। मकरध्वजपदश्च कन्दर्पसमुद्रोभयवाचकम्। एवमेव शब्दस्यान्यसन्निधिरप्यभिधानियमने प्रयोजकः। यथा—**'करेण राजते नागः'** इत्यत्र करशब्दो हस्तबोधकः। नागपदस्य सर्पपरत्वे नैवमन्वयः सम्भवति। नागपदस्य गजे करपदस्य शुण्डायां शक्तिग्रहणे तयोरन्वयः सम्भवति। सामर्थ्यवशादप्यर्थनियमनं भवति। यथा—**'मधुना मत्तः कोकिलः'** अत्र कोकिलस्य मदजनकत्वं वसन्ते एव सम्भवति। मधुशब्दस्य वसन्ते शक्तिनियमनम्, न त्वसुरादौ। कोकिलमादकत्वं वसन्तस्यैव, न सुरायाः।

औचित्यमप्यभिधानियमनं करोति **'पातु वो दयितामुखम्'** इत्यत्र मुखशब्दस्य सामुख्यवैमुख्योभयपरत्वेऽपि पातु इति सामुख्यस्यैव त्राणकरणत्वम्। कामार्थानां पुरुषाणां त्राणयोग्यत्वं

---

१. महाभाष्योद्द्योतः १।२।४५। २. वा० प० २।३१६। ३. तदेव—३।३१४–१५।

मुखशब्दस्य सामुख्ये एवाभिधानियमनं सम्पादयति। देशोऽप्यभिधाया नियामकः। यथा—**'भात्यत्र परमेश्वरः'** यद्यपि परमेश्वरशब्दो राजपरमात्मोभयवाची, तथापि राज्ञि शक्ति-नियमनं भवति, यतो राजा एव देशे समृद्धो भवति।

कालोऽपि शक्तिनियामकः। तद्यथा—**'चित्रभानुर्दिने भाति'** चित्रभानुशब्दोऽग्नौ वर्तते, परन्तु दिने सूर्यस्यैव मानसम्भवात्। एवमेव स्त्री-पुं-नपुंसकलिङ्गान्यपि शक्तिनियामकान्येव। यथा— **मित्रो भाति'** इति प्रसङ्गे सूर्यरूपार्थप्रतीतिर्भवति। पुंलिङ्गस्य मित्रशब्दस्य सूर्यपरत्वम्, नपुंसकस्य मित्रशब्दस्य सूर्यबोधकत्वमेव।

स्वरादिवशादप्यर्थनियमनं भवति। यथा—**'इन्द्रशत्रुर्वर्धस्व'** इत्यत्राद्युदात्तत्वे इन्द्रः शत्रुः शातयिता, नाशयितेत्यर्थस्य प्रतीतिर्भवति, अन्तोदात्तत्वे त्विन्द्रस्य शत्रुरित्यर्थो लभ्यते। अत इन्द्रस्य शत्रुरित्यर्थो लभ्यते। तस्मात् स्वरः शक्तिनियामको भवति।

आदिपदेनाभिनयादीनां ग्रहणम्। **एतावन्मात्रस्तनी'** इत्युदाहरणमभिनयस्य। **'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्'** इत्यत्रापदेशस्योदाहरणम्। इदंशब्दस्य वक्तरि अभिधानियमनमङ्गुलिनिर्देशरूपेणापदेशेन सम्पाद्यत इति शम्।

● ● ●

# सौरपरिवारः

विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी
**उपाचार्योऽध्यक्षश्च ज्योतिषविभागस्य,**
**सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

**ग्रहाः[1]**

एतत्खलु विदितप्रायं यत् सूर्याचन्द्रमसौ विहाय अष्टौ एतादृशा ग्रहाःखगोले सन्ति, येषां स्थानमितरनक्षत्रापेक्षया परिवर्तनशीलमस्ति। पृथिव्या दैनिकपरिभ्रमणाद्धेतोः समस्तोऽपि खगोलः समकोणवेगेन प्राच्याः पश्चिमस्यां दिशि परिभ्रमन्निव संदृश्यते, परं ग्रहाणां गतिः सरला इति नाकलनीया, अपि तु वक्रोच्चावचाऽपि निश्चलतारामण्डलं[2] त्यक्त्वा मध्ये मध्ये तेषां पूर्वोक्ता गतिशीलताऽवरुद्धाऽपि भवति।

सर्वेऽपि ग्रहाः क्रान्तिवृत्तमनुवर्तमानाः[3] सूर्यवद् विचरन्ति। आकाशीयोऽयं भागो राशिचक्रमिति[4] स्मर्यते। एतस्माद् दक्षिणोत्तरदिग्विभागे नाधिकं विनिवर्तन्ते। प्रायेण ग्रहाः क्रान्तिवृत्तीयसमतलाद्दक्षिणोत्तरे ३° अंशत्रयमपि नापक्रामन्ति। आम्, बुधः पञ्च अंशान्, मङ्गलः सप्तांशान्, शुक्रश्च नवांशान् यावदपक्रामति।

सूर्यात् कियतामंशानां दूरे स्थिता एते सन्तीति ज्ञाने जाते सति ग्रहदर्शनं सम्भाव्यते। यदा ते सूर्यपथि समावृत्ता भवन्ति, तदा तेऽदृश्या अवतिष्ठन्ते। सूर्योदयात् किञ्चित् प्राक् सूर्यास्तात् किञ्चिदनन्तरं वा तेऽस्माभिर्द्रष्टुं शक्यन्ते। बुधग्रहस्तु[5] सूर्योदयात् प्राक् सूर्यास्तात् पश्चाद्वा घटिकात्रयं घटिकाषट्कमात्रं विहाय ततोऽधिकं कदाचिदपि नावलोकयितुं शक्यते। यतः सूर्यादेषोऽष्टाविंशतिरंशेभ्यो दूरं नावतिष्ठते। एकदा दूरावस्थित्यनन्तरं दूरत्वं क्रमशोऽपक्षीयते, संयोगावसरे[6] दूरत्वं शून्यांशमनुगच्छति। शब्दान्तरेण सूर्यपृथिव्योः संयोजिका सरला रेखैवास्य ग्रहकक्षाया निदेशिका संतिष्ठते। संयोगादनन्तरमेतद्दूरत्वं भिन्नायां दिशि वर्धते। संयोगकाले मध्ये मध्ये प्रोक्तग्रहः सूर्यबिम्बे मेचकलाञ्छनवत् परिभ्रमद् दृश्यते। एतल्लक्ष्म सूर्यातिक्रान्तिरित्युच्यते[7]। एतेनेदं स्फुटमवबुध्यते यदयं सूर्यापेक्षया पृथिव्याः सन्निकटे स्थितः सूर्यपृथिव्योरन्तराले वर्तते।

एवमेव शुक्रोऽपि[8] सूर्योदयात् प्राक् सूर्यास्तानन्तरं वा घटिकात्रयादधिककालं यावन्न कदापि दृष्टिपथमश्नुते। सूर्यादस्य दूरत्वम् ४७° सप्तचत्वारिंशदंशेभ्योऽधिकं नानुनीयते। संयोगावसरेऽयमपि सूर्यबिम्बस्य समक्षमिव परिक्रममाणः संदृश्यते।

---

१. Planets (प्लेनेट्स)।
२. Constellations (कान्स्टीलेशनस्)।
३. Ecliptic (इक्लिप्टिक)।
४. Zodiac (जोडाइक)।
५. Mercury (मरकरी)।
६. Conjunction (कन्जन्क्शन)।
७. Transit (ट्रान्जिट)।
८. Venus (वीनस्)

एतद्ग्रहद्वयं वर्जयित्वाऽन्ये ग्रहा रात्रौ निर्भरं संलक्ष्यन्ते। सूर्यात्तेषां दूरत्वं बुधशुक्रयोरिव द्वयोः सीम्नोर्मध्ये परिसीमितं नास्ति। कदाचिच्छनकैः कदाचित्तीव्रं तत्तेषां प्राकटयमेकस्यां दिशि प्रवर्धमानं विद्योतते। यदा तत्परिमाणम् ३६०° षष्ट्युत्तरशतत्रयांशानां प्रभवति, तदा सूर्येण साकं तेषां पुनर्योगः स्वाभाविक एव। यदैतद्दूरत्वम् १८०° अशीत्युत्तरशतमंशानां जायते, तत्रापि पृथिवी-सूर्यग्रहाणां संस्थितिरेकस्यां सरलरेखायां जायते। सैषा स्थितिर्वियुति-संज्ञयाऽभिधीयते[1]। अस्यां स्थितौ पृथिवी सूर्यस्य ग्रहाणां च मध्यगा भवति। तदत्र ग्रहाः सूर्यश्च विभिन्नदिक्षु भासन्ते। बुधशुक्रयोः सैषा वियुतिर्न कदाचिदपि सम्भाव्यते।

बुधशुक्रयोः शेषेष्वन्यग्रहेषु द्वितीयो महान् भेदोऽयं यद् युतिकालेऽपि ते तौ विहाय सूर्य-बिम्बसमक्षं नागच्छन्ति। ते सूर्यबिम्बस्यानु तिरोहितास्तिष्ठन्ति। सूर्यस्य तेजसा तिरस्कृता-स्तदन्तर्गता वा भवन्ति। एतेनेदं स्पष्टं यत्तदा पृथिव्या एतेषां ग्रहाणामन्तरं सूर्यापेक्षयाऽधिकं भवति।

वैज्ञानिकयुगात् प्राक् पृथ्वी स्थिरा(अचला) अमन्यत। तदा ग्रहाणां विचित्रगतीनां कारण-मिदमन्यद् यत् सूर्याचन्द्रमसोरिव शिष्टा ग्रहा अपि पृथिवीं परिक्राम्यन्ति। अन्तरमेतावदेव यत् सूर्यस्य परिक्रमणमार्गो वर्तुलोऽस्ति, किन्तु ग्रहाणां कक्षा[2] अधिचक्रीया[3] भवन्ति,




चित्रनं० ( १ )

यदि वयं कमपि कल्पितं बिन्दुं क इत्याख्यं वृत्ताकारपथि पृथ्वीं परिक्राम्यन्तम् पश्येम, अवगच्छेम वा, तदा ग इत्याख्यो ग्रहो न तस्मिन् पथि परिक्रामेत्। स तु तं कल्पितबिन्दुं क इत्याख्यं परितो लघुं वृत्ताकारपथं निरन्तरं परिभ्रमन् पृथिवीं परिक्राम्यति। यदा शकटो भूमौ चलति, तदा यथा तस्य चक्रस्य धूः पृथिव्यां समान्तरं पन्थानं गच्छति, तदा चक्रस्य परिधेः कोऽपि बिन्दुस्तां धुरमपि निरन्तरं परिक्रमति, तथा क बिन्दुना साकं पृथ्वीमपि परिक्राम्यति।

---

१. Opposition (अपोजीशन)। २. Grbits ३. Epicyclic (एपीसाइक्लिक)।

किन्तु यदाप्रभृति वैज्ञानिकानुसन्धानप्रक्रियया मतमेतदास्थितं लोके यत् सूर्यः स्थिरः पृथिव्येव तं परिक्रामति, तदाप्रभृत्येव ग्रहगतेरेषा जटिलताऽपि दूरं गता। साम्प्रतं तु सर्वसम्मत्या मतमेतदनुसंहितं यत् सर्वेऽपि ग्रहाः पृथिवीवत् सूर्यं परिक्राम्यन्ति, तेषां कक्षा अपि सूर्यान्निर्दिष्टदूरत्वे संस्थिताः प्रायेण वृत्ताकाराः सन्ति (वृत्तमपि दीर्घमेवेति याथार्थ्येनाभिप्रेयते)। एतत्सिद्धान्तानुसारं पृथिव्यपि ग्रहेषु निर्णीता, सूर्यमादाय ग्रहाणामेष समुदायः सौरपरिवार[1]-नाम्ना प्रथितो लोके। सत्यमप्येतत् प्रत्यक्षमेव यत् सूर्य एवास्य समुदायस्य सर्वप्रमुखः सर्वतो महान् ग्रह इति।

बुधशुक्रयोरन्यग्रहेभ्यो या विभिन्नता प्राग् वर्णिता, तत्कारणमिदमेव यत्पृथिवीमपेक्ष्य सूर्यादन्यग्रहाणां दूरत्वमधिकं बुधशुक्रयोरल्पमिति। चित्रे बुधशुक्रमङ्गलानां तथा पृथिव्याश्च




चित्रसं० ( २ )

कक्षाः प्रदर्शिताः। बुद्धशुक्रौ पृथ्वीकक्षान्तर्गतौ। मङ्गलस्तद्बाह्यः। गुरुशनैश्चरादयोऽपि बाह्या एव। ते चित्रे नैव प्रदर्शिताः।

बुधशुक्रयोः कक्षानिरीक्षणेनैतदवगमः सरलः सुगमश्च यत् सूर्यात् तयोर्दूरत्वं कस्माच्चिद् महत्तमान्मानादधिकं कथं न सम्भवतीति ? पृथिवीशुक्रयोः पृथिवीसूर्ययोः संयोजिका रेखा

1. Solar System (सोलर-सिस्टम्)।

पृथिवीसूर्ययोः सूर्यपृथिवीशुक्राणां कोणदूरत्वनिश्चयानन्तरमेव निर्मीयेत, तदैव पृथिवीशुक्रयोः शुक्रकक्षायां वृत्तस्पर्शिनी स्पर्शरेखाऽपि[1] निर्मीयेत। मङ्गलादिबाह्यग्रहाणां कक्षासु पृथिव्याः सकाशात् काऽपि स्पर्शरेखा न निर्मातुं प्रदर्शयितुं वा शक्यते।

एते ग्रहा विभिन्नैर्वेगैः कथं प्रचलन्ति ? कदाचिदेते वेगेन कदाचिच्च शनकैः कथं प्रचलन्तः प्रतीयन्ते ? तत्कारणमेतदेव यदेते ग्रहाः सूर्यस्य परिक्रमणं विभिन्नेषु कालेषु कुर्वन्ति। चित्रे प्रक्रमकालस्तत् तद्वर्षसंख्यया संकेतितो विद्यते। ग्रहाणां गतिः कदाचित् पृथिवीगमनदिश्येव जायते, कदाचित्तद्भिन्नदिशि, कदाचित्तु समकोणिकदिशि। प्रारम्भावस्थायां ग्रहाणां गतिर्मन्दा प्रतीयते, तदनु वेगवतीति। तृतीये परिक्रमणे (प्रक्रमे) ते स्थिरा इति प्रतीयन्ते।

**केपलरमहोदयस्य[2] नियमाः**

समधिकयाथार्थ्यपरिमापकैः प्रेक्षणैः १६०९ खीष्टाब्दे ग्रहगतिसम्बन्धे तेनाधोलिखिता विख्यातनियमा आविष्कृताः। तथा हि—

१. प्रत्येकं ग्रहाः सूर्यमभितो दीर्घवृत्तीयकक्षायां परिक्राम्यन्ति। सूर्यो दीर्घवृत्तस्यैकस्मिन् नाभौ[3] तिष्ठति। सामीप्यादेतेषां कक्षा वृत्ताकाराः प्रतिभान्ति, सूर्यश्च तेषां केन्द्रस्थतयाऽवगन्तुं पार्यते।

२. अथ सूर्याद् ग्रहाणां संयोजिका सरला रेखाऽनेन प्रकारेण परिक्रामति, येन समकालं तया समं क्षेत्रमतिक्रामति शब्दान्तरे यावता कालेन ग्रहाः कप्रभृति खपर्यन्तं गत्वा त्रिभुजीयक्षेत्रं




४·३

चित्रम् ( ३ )

सूर्य-क-खरेखा निर्मापयन्ति, तावता कालेन ते गप्रभृति घपर्यन्तं कल्पितक्षेत्रं प्राप्नुवन्ति। यदि क्षेत्रं नाम सु-ग-घानां सु-क-खानां भवेत्।

अत्रेदमाकूतम्—ग्रहाणां क्षेत्रविषयको वेगः[4] समान एवावतिष्ठते।

एतन्नियमानुसारं सुस्पष्टं गघौ > कखौ। अत एव ग्रहाणां रेखीयो वेगः कदापि साम्यं न भजते।

---

१. Tangent (टैन्जैन्ट)। २. Keplers Laws. (कैपलर्स लाज्)।
३. Focus. (फोकस्)। ४. Areal Velocity (एरियल वेलासिटी)।

३. यदि ग्रहाणां कक्षाणां दीर्घोऽक्षः[1] अ स्यात्, तथा परिक्रमणकालः प स्यात्, तदा $\frac{\text{ट २}}{\text{१ ३}}$=अचराः, अथवा $\frac{\text{टकारस्य वर्गः}}{\text{अकारस्य घनम्}}$ =अचराः संतिष्ठन्ते । शब्दान्तरेण यदि द्वयोर्ग्रहयोः परिक्रमणकालः क्रमेण टकारस्तथा टकार २ भवेत्, तथा तेषां कक्षाणां दीर्घोऽक्षः क्रमशः अ तथा a २ भवेत्, तदा $\frac{\text{ट २}}{\text{ट २}}$=भवेताम् $\frac{\text{अ ३}}{\text{अ ?}}$ अथवा $\frac{\text{टकारैकयोः वर्गः}}{\text{टकारद्वयोः वर्गः}} = \frac{\text{अकारैकयोः घनम्}}{\text{अकारद्वयोः घनम्}}$

केपलरेणैते नियमाः केवलं प्रेक्षणेन प्राप्ताः । तस्यैषां नियमानां कारणं ज्ञातं नासीत् । न्यूटनेनैषां कारणं गुरुत्वाकर्षणमिति विज्ञापितम् । अनया परिकल्पनया न्यूटनोक्तगतिविज्ञानेन च तन्निरूपकनियमैश्च एते नियमाः सिद्धान्ततोऽपि प्राप्यन्ते ।

वस्तुगत्या ग्रहकक्षा यथार्थतो दीर्घवृत्ताकारा नैव भवन्ति । अस्य कारणमपि सुस्पष्टमेव । सूर्याकर्षणमतिरिच्य प्रत्येकं ग्रहेषु तदितरग्रहाणामाकर्षणमपि समापतति । यद्यपि सूर्यापेक्षया तदल्पमेव, तथापि तद् ग्रहान् दीर्घवृत्तीयकक्षातो न्यूनाधिकमात्रया प्रभवत्येव; स्वस्वस्थानात् प्रचालयत्येव, तत्तद्वेगेषु न्यूनाधिकत्वं जनयत्येव । प्रत्येकं ज्योतिर्विदेषामाकर्षणानां प्रभावविचारं चिन्तयेदेव ।

अत्रेदमपि विज्ञापनीयमेव यदेते समस्ता ग्रहाः स्वतः प्रकाशिता[2] न सन्ति । सूर्यप्रकाशेनैते प्रदीप्ता भवन्ति । चन्द्रः सूर्यप्रकाशेन दीप्यते यथा, तथैवैतेऽपि । इदमेव कारणं यद् बुधशुक्रयोर्बिम्बः पूर्णतया वर्तुलत्वं न भजते । चन्द्रबिम्बस्य शुक्लकृष्णपक्षयोर्यथा ह्रासवृद्धी जायेते, तथैवान्येषां ग्रहाणां बिम्बा अपि ह्रासवृद्धी भजन्ते, विभिन्नाकृतिषु लक्ष्यन्ते च । ग्रहाणां प्रकाशाभासाः सूर्यप्रकाशच्छायामनुहरन्त्येव ।

ग्रहेषु शनेराकृतिर्विचित्रा भवति । अन्यग्रहवदस्य मध्यभागोऽपि वर्तुल एव, किन्तु तमाच्छाद्यस्थितास्त्रयो वलयाः कुण्डलाकारा दृश्यन्ते । एते त्रयोऽप्येकस्मिन् तले(मूले)अवस्थिताः सन्ति । सर्वेभ्योऽधस्तनो वलयः प्रभूतमुज्वलं नास्ति । एष शनेर्निरक्षादारभ्य प्रायेण सार्धत्रयक्रोशसहस्रमारभ्य नवसहस्रक्रोशपरिमितो विस्तृतोऽस्ति । एतदनन्तरं पञ्चशतक्रोशाणां मध्यान्तरालो विद्यते । अथ द्वितीयो वलयो भूरिप्रकाशकारकः प्रारभ्यते, अस्य परिणाहोऽष्टसहस्रक्रोशाणां भवति । अस्यानन्तरं पञ्चदशशतक्रोशमितो मध्यान्तरालो वर्तते । तदनन्तरं तृतीयो वलयः सर्ववाह्यत्वेन प्रथितः प्रारभ्यते । एषोऽपि विशेषप्रकाशान्वितः । अस्य परिणाहः प्रायेण सार्धद्वाविंशतिसहस्रक्रोशमितः । किन्तु महदाश्चर्यकरमेतद् यदेषां त्रयाणां वलयानां स्थौल्यं पञ्चक्रोशादारभ्य पञ्चविंशतिक्रोशमित एव वर्तते । दूरवीक्षणेनावलोकने शनिरतिशयेन मनोहरो दृश्यते ।

**उपग्रहाः**[3]

दूरवीक्षणयन्त्रेण दर्शने सति ज्ञायते यदेषां ग्रहाणां पार्श्वे केचिदन्येऽपि लघुकायाः प्रकाशोपेताः पिण्डाः सन्ति, ये उपग्रहा इत्याख्यां भजन्ते । सूर्यस्य परिक्रमणे ते स्वस्वग्रहैः सार्धं

---

१. Major axis (मेजर ऐक्सिस) ।

२. Self Luminous. (सेल्फ ल्यूमीनस) ।    ३. Satellites (सैटेलाइट्स) ।

परिक्रामन्ति । तथा सूर्यपरिक्रमावकाशे स्वयं स्वीयजनकग्रहान् परिक्रामन्ति । चन्द्रोऽपि पृथिवी-परिक्रान्त एतादृश एवैक उपग्रहः । अस्माकं सातिशयसामीप्यस्थितत्वादसौ विशालः प्रकाश-मयश्च लक्ष्यते । यथा पृथ्वीच्छायाप्रवेशाच्चन्द्रो ग्रहणयुतो जायते, तथैवैत उपग्रहा अपि स्वीये परिक्रमणे ग्रहाणां पृष्ठभागमाश्रयन्ति, तदा तेऽपि ग्रहणाक्रान्ता भवन्ति । कियत्कालपरिमितेऽवधौ तेऽप्यदृश्या लक्ष्यन्ते । पश्चाद् यथाकालं ते द्वितीयस्यां दिशि प्राकट्यं लभन्ते ।

विभिन्नग्रहोपग्रहाणां सङ्ख्या निम्नप्रकारा विद्यते—

| ग्रहाः | उपग्रहसङ्ख्या |
| --- | --- |
| पृथ्वी | |
| मङ्गलः | Mars (मार्स) |
| वृहस्पतिः | Jupitar (जुपिटर) |
| शनिः | Saturn (सैटर्न) |
| यूरेनसः वारुणी वा | Urenus (यूरेनस) |
| नेपट्यूनः वरुणो वा | Neptune (नेपट्यून) |

एषामुपग्रहाणां परिक्रमणकालोऽपि विभिद्यते । न्यूनतमः (लघुत्तमः) कालः सार्धसप्त-घण्टापरिमितो वृहत्तमः (महत्तमः) कालो वर्षद्वयात्मको गुरुत्वाकर्षणप्रभाव उपग्रहेष्वपि तथैव प्रभवति, यथा ग्रहेषु । यस्य ग्रहस्यात्यन्तसामीप्यमुपग्रहो भजति, तस्मिन्नुपग्रहे तस्य प्रभावो वलीयान् जायते ।

तथा तेनैव स्वीयजनकग्रहेण प्रेरितोऽसौ तं परिक्रामत्यपि । एतत्क्रियाऽपि केपलर-न्यूटन-निर्दिष्टनियममनुरुद्धचैव भवति । अत एव ग्रहोपग्रहयोर्दूरत्वविनिश्चये । परिक्रमणकाले च त एव नियमाः सम्बन्धाश्चानुवर्तन्ते, ये ये सूर्यतदन्यग्रहेष्विति ।

अधुना ये कृत्रिमा उपग्रहा रूस-अमेरिकावास्तव्यैर्वैज्ञानिकैः समये समये खे प्रक्षिप्यन्ते, तेऽपीमानेव नियमाननुरुन्धन्ति । पृथ्वीसकाशाद् यावद्दूरं तेषामुत्पातनमभीष्टं तदनुरूपमेव वेगादिप्रबन्धस्तत्र क्रियते । एषां परिकलनप्रेक्षणादिषु यत्साम्यमुपलम्यते तेन न्यूटनाविष्कृत-गुरुत्वाकर्षणसिद्धान्ते प्रकृष्टं प्रामाण्यं संमन्यते ।

**क्षुद्रग्रहाः**

पूर्वोक्तग्रहोपग्रहान् वर्जयित्वा तदितरानेकक्षुद्रग्रहा अपि स्वास्तित्वं रक्षन्तीति वैज्ञा-निकानुसन्धानेनावगम्यते । तेऽपि सूर्यमेव परिक्रामन्ति, लघुकायत्वेन केवलं चक्षुषा दृष्टिपथं नाश्वन्ति । सर्वप्रथमतया १८०१ खीष्टाब्दे कश्चनैकः क्षुद्रग्रहो दूरवीक्षणसाहाय्येनावगतोऽव-लोकितश्च । १८४७ खीष्टाब्दं यावत् तेषां संख्या पञ्च सञ्जाता । तदा प्रभृत्येव प्रत्यब्दं नव-नवानां क्षुद्रग्रहाणामवगमः परिवृंहितो जायते । चित्रग्रहणविज्ञानेन (फोटोग्राफी) अद्य यावत् प्रायः २००० सहस्रद्वयं क्षुद्रग्रहाणां स्थितेरवगतिः सञ्जाताऽनुमीयते चैषां संख्या न्यूना भवितुं नार्हति ।

एषां प्रेक्षपणप्रयासेनावगतं यदेषां क्षुद्रग्रहाणां कक्षा मङ्गलबृहस्पत्योः कक्षान्तर्गता संतिष्ठते। एतेषां कक्षा प्रायोऽन्यग्रहकक्षावद् वर्तुला न भवति। सूर्यात् क्षुद्रग्रहाणां केषाञ्चिन् महत्तमं दूरत्वमल्पतमदूरत्वात् पञ्चगुणाधिकं भवति। कदाचिदेते मङ्गलग्रहकक्षाः समुत्तीर्य पृथिव्याः सन्निधिं भजन्ते, यत एषां कक्षाः सदा क्रान्तिवृत्ततलस्य सान्निध्यं नार्हन्ति। एषां कक्षाणां तलं क्रान्तिवृत्तात् ४३° त्रिचत्वारिंशदंशं यावदवनता प्राप्यते।

एते समेऽपि क्षुद्रग्रहा लघुकायाः, एषां व्यासस्य परिमाणं दुःशकमेव। बृहत्तमस्य व्यासश्चत्वारिंशदधिकशतद्वयक्रोशात्मकः, केषाञ्चन तु स्यात् पञ्चक्रोशेभ्योऽपि न्यूनः। प्रायेण तु तेषां व्यासः पञ्चक्रोशात् पञ्चविंशतिक्रोशात्मक एव। अथ चैवमनुमीयते समग्रक्षुद्रग्रहाणां संभूय द्रव्यमानं पृथिव्या द्रव्यमानस्य १।६४० अंशेभ्योऽधिकं न सम्भाव्यते।

एतन्निर्विवादं यदेतेषां क्षुद्रग्रहाणां गतिः पूर्णतया केपलरनियमान् नानुरुणद्धि, यतो बृहस्पतेस्तथान्यग्रहाणामाकर्षणेनैषां कक्षाकृतिः पर्याप्तं विक्रियते।

**धूमकेतुरथवा सपुच्छनक्षत्राणि**[1]

अधस्तादुक्तग्रहोपग्रहक्षुद्रग्रहान् विहाय सौरपरिवारे केचनैतादृशा अपि पिण्डाः संप्राप्यन्ते, ये कदाचिद् नभसि दृश्यन्ते। एते केवलं सप्ताहं यावन्मासपर्यन्तं वाऽवलोक्यन्ते, ततोऽदृश्या भवन्ति। एषामाकृतिर्वर्तुला नास्ति। एषां पृष्ठभागे पुच्छमनुस्यूतं भवति, यद्धि पारदर्शकं शब्दान्तरेण तन्मध्यभागतस्तत्पृष्ठांशस्थितनक्षत्राणि द्रष्टुं शक्यन्ते। यथा यथा धूमकेतुः सूर्यपार्श्वे समागच्छति, तथा तथा तस्य पुच्छं दैर्घ्यविस्तारयोः प्राक् प्रवर्धते, पश्चात्क्रमेण ह्रसति। केचन धूमकेतवः स्वपुच्छवृद्ध्या नभोमण्डलस्यार्धभागमावृण्वते, तेषां ज्योतिश्च परिवृद्धं दिवाऽपि संलक्ष्यते। किन्त्वेतादृशा बृहन्तोऽल्पा एव प्रायेण ते क्षुद्रकाया एव दूरवीक्षणेन द्रष्टुं पार्यन्ते। द्वित्रा धूमकेतवस्तु नभसि प्रत्येकं रात्रिषु द्रष्टुं शक्यन्ते। अद्य यावद् यावन्तो धूमकेतवः संदृष्टास्तेषां संख्या सहस्रान्न्यूना नास्ति। एषां गतिप्रेक्षणेन प्रतीतप्रायं यदेतेऽपि विभिन्नग्रहवत्सूर्यं परिक्रामन्ति, तद्वदेषा कक्षा अपि दीर्घवृत्तीया एव। किन्त्वेतेषामेतानि दीर्घवृत्तान्यायतानि। परिणामत एते पिण्डाः कदाचित् सूर्यसान्निध्यं प्राप्नुवन्ति, कदाचिद् दूरं प्रयान्ति, तदा ते दूरवीक्षणादपि नावलोक्यन्ते। एतेषां परिक्रमणकालोऽपि महान् भवति। चत्वारिंशद्धूमकेतूनां परिक्रमणकालो वर्षत्रयान्नववर्षाणां भवति। विंशतेर्धूमकेतूनां शतसहस्रवर्षाणामाभ्यन्तरे। त्रिंशतो धूमकेतूनां सहस्रायुतवर्षाणामाभ्यन्तरे निश्चितः। एते दीर्घाः परिक्रमणकालाः तेषां कक्षाणां भागशोऽवलोकनेन गणितेनावगता अभूवन्। एतेषां याथार्थ्ये संदेहसंभावना भवेदेव। कतिपया एव धूमकेतवः स्वीयकक्षा अतीत्य पुनर्द्रष्टुं शक्यन्ते।

अनेकेषां धूमकेतूनां परिक्रमणदिशा ग्रहाणां क्रमणदिशातो विपरीता भवतीत्याश्चर्यंकरम्। तेषु केचन दक्षिणावर्तिनः, केचन वामावर्तिनः। तेषां कक्षातलं क्रान्तिवृत्तीयतलाद् यान् कोणान् निर्मान्ति, तेषां मानम् ०° अंशादूर्ध्वम् १८०° अशीत्युत्तरशतमंशानां परिदृष्टाः। कोणनिर्माणवैलक्षण्यक्रमरहस्यमिदानीं यावदज्ञातमेव वैज्ञानिकानाम्।

---

१. Comets (कामेट्स)।

एतादृशा अपि केचन धूमकेतवो वर्तन्ते, येषां कक्षा परवलयाकृतेः[1], अथवाऽतिपरवलयाकृतेः[2] प्रतीयन्ते। यद्यपि एतादृश्यः कक्षा गुरुत्वाकर्षणनियमविरोधं नावहन्ति, तथाप्येते दीर्घवृत्तीया न विद्यन्त इति सधीरं वक्तुं न पार्यते। एषां यावन्तोंऽशाः प्रेक्षणेन निरीक्षिताः, तेऽप्युक्ताशङ्काप्रशमनाय न प्रभवः। यदीमाः कक्षा वस्तुतः परवलयाकारा अतिपरवलयाकारा वा स्युः, तर्हीदृशा धूमकेतव एकदा सूर्यसमीपं गत्वा परावृत्त्य पुनर्नैवागमिष्यन्तीति निश्चप्रचम्।

उल्काः[3]

उल्केति भङ्गुराणि नक्षत्राण्युच्यन्ते। प्रत्येकं रात्रिषु नभसि सहसोज्वलं वस्तु पतत् प्रतीयते, क्षणं वेगेन धावतीति दृश्यते, तत ऊर्ध्वं निलीयते च। दृष्टिनिर्बन्धाद्धेतोः[4] काऽपि शुभ्रज्योत्स्ना निमिषं तदर्धं वाऽवलोक्यते।

वस्तुत एतानि नक्षत्राणीति न साधिकारं वक्तुं युज्यते। एषां निरतिशयो वेग एव प्रख्यापयति यद्यदैते दृश्यन्ते, तदा ते पृथिव्याः सन्निकटे वर्तन्ते, इमे लघुकाया द्रव्यकणाः सन्ति ये ग्रहवत् सूर्यं परिक्रामन्ति। कतिपये तु कस्यचिद् धूमकेतोः कक्षायामेव भ्रमन्तो दृश्यन्ते। एतेनानुमीयते यदेते धूमकेतोः पुच्छस्य विकीर्णाः कणाः। एषु भूयांसः सिकतातो बृहन्तो न भवन्ति।

किन्त्वेषु केचन कतिचन टनपरिमाणादपि बृहत्परिमाणवन्तः सन्ति। पूर्वं तु नावलोक्यन्ते, किन्तु यदैते पृथिव्या वायुमण्डलं प्रविशन्ति, वायवीयाणुषु सम्भूय प्रचण्डवेगेन धावन्ति, तदेयती उष्णता भवति ययैते प्रज्वलन्ति दृष्टिपथमारोहन्ति च। किन्तु क्षणेनैव ते वाष्पे परिणमन्तेऽथ च पृथ्वीतलं यावन्न प्राप्नुवन्ति। कदाचित् कोऽपि बृहत्पिण्डः पृथिव्यां पतत्यपि तत्रान्तःप्रविश्य बृहन्तं गर्तं कुरुते। अरिजोनानाम्नि[5] स्थाने कश्चन गर्तः ५७० फुट, गभीरस्तथा-४२०० फुटविस्तृतः प्राप्तः। यो हि पूर्वोक्तोल्कापातपरिणामात्मकः ५००० पञ्चसहस्रवर्षेभ्यः पूर्वं निर्मितः। १९०८ खीष्टाब्दे साइबेरियाख्यमरुभूमौ[6] यो हि उल्कापातः समजनि, तेन त्रयाणां चतुर्णां वा वर्गमील इत्याख्यपरिमाणवतः क्षेत्रस्य संहार एव (विनाश एव) समजायत। तत्केन्द्रमभितः प्रायेण पञ्चक्रोशं यावत् सर्वाणि वस्तूनि तत्तेजोऽभिभूतानि ईषद्दग्धानीव व्यजायन्त। सार्धसप्तक्रोशं व्याप्य वृक्षास्तीव्रवायुवेगेन भग्ना बभूवुः। पञ्चदशक्रोशे स्थिता वृक्षास्तु स्वमूलात् प्रचलिता भिन्नदिशि तिर्यग्भूताः समभवन्। पातस्थानं समन्तादसंख्या लघुबृहद्गर्ताः सञ्जाताः। येषु बृहत्तमस्य विस्तारः १५० फुटपरिमितः। एतेनानुमीयते पतनसमकालमुल्का सहस्रधा विकीर्णाऽभूत्।

इत्थं पतितानानेकोल्कापिण्डान् संगृह्य तान् चित्रविचित्रालये समस्थाप्यन्त, येषु बृहत्तमस्य परिमाणम् ३६०५ टनपरिमितम्। एतेऽनवहितदृष्ट्या दर्शने पाषाणशकला लक्ष्यन्ते, किन्तु

---

१. Parabola (पैराबोला)। २. Hyperbola (हाईपरबोला)।
३. Meteors (मिटियार्स)। ४. Persistence of Vision (परसिस्टेन्स आफ विजन)।
५. Arizona (एरिजोना)। ६. Siberia (साइबेरिया)।

तत्र लोहसीसकादीनां मिश्रणमपि समधिकं प्राप्यते। विश्लिष्याध्ययनेऽत्र पृथिव्याः ३० त्रिंशद् रासायनिकतत्त्वान्युपलब्धानि[1], किन्त्वत्रैकमप्येतादृक् तत्त्वं नोपलब्धं यत् पार्थिवं न स्यात्।

**राशिचक्रीयः प्रकाशः[2]**

रात्रौ नभसि सर्वथा निरभ्रे चन्द्रमसोऽनुपस्थितौ सूर्योदयात् प्राक् सूर्यास्तात् पश्चाद् वा क्रान्तिवृत्तीये वाऽयं प्रकाशते। क्षितिजसमीपे तु प्रकाशोऽयं विस्तृतोऽवलोक्यते, किन्तूर्ध्वभागेऽस्य विस्तारो ह्रसन्निव लक्ष्यते। वस्तुतोऽस्याकृतिर्दीर्घवृत्तेऽवभासते। विश्वस्य ते क्रान्तिवृत्तीयतले तत्सन्निकटे वा लघवो द्रव्यकणाः परमाणवो वाऽसंख्याताः सूर्यं परिक्रामन्ति। एषु यदा सूर्यप्रकाशो निपतति, तदाऽस्मात् प्रकीर्णोऽयं नेत्रे प्राप्नोति, अत एव राशिचक्रस्य केषुचिद् भागेषु प्रकाशोऽयं मन्द इव प्रतीयते।



१. Elements (एलिमेन्ट्स)।
२. Zodiacal Light (जोडियाकल लाइट)।

# ज्योतिषशास्त्रे सन्तानविमर्शः

डॉ० नागेन्द्रपाण्डेयः

**प्राध्यापकः—ज्योतिषविभागे**

**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी**

इहानादिसृष्टिपरम्परायां कारणभूतात् पदार्थात् कार्यभूतस्य पदार्थस्योत्पत्तिर्दृश्यते। सर्वे पदार्थाः सांयोगिकक्रियया समुत्पद्यन्ते। कस्यचिदपि पदार्थस्य स्वरूपोपलब्धिः स्वसमवायिनः पदार्थात् सञ्जायते। सोऽपि भाविनं पदार्थमुत्पादयति। अनयैव रीत्या सम्पूर्णस्य चराचरात्मकस्य जगतोऽनन्तब्रह्माण्डस्यापि सृष्टिस्तथा विकासक्रम उपलभ्यते।

प्रस्तुतनिबन्धे मानवसृष्टिसन्दर्भे विमर्शो विधातव्यः। सर्वे मनुष्याः सन्तर्ति वाञ्छन्ति। दाम्पत्यजीवनस्य यत् सौख्यं तस्य चरमपरिणतिः सन्तानप्राप्तावेवेति मन्यन्ते विपश्चितः। भारतीयजीवनदर्शने सन्तानप्राप्तिर्दाम्पत्यप्रेम्ण एकमनिवार्यं तत्त्वमस्ति। अत एवोक्तं भवभूतिना-महाकविना—

**अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।**
**आनन्दग्रन्थिरेकोऽयमपत्यमित्यभिधीयते** ॥ (उत्तररामचरितम्–३।१७)

अर्थाज्जाया-पत्योर्हृदयस्य स्नेहसंश्रयादानन्दग्रन्थिरेवापत्यमिति निगद्यते।

मनुरपि गृहस्थाश्रमिणां सन्तानप्राप्तिरावश्यकीति निरूपयन् प्राह—

**पुन्नाम्नो नरकादस्मात् त्रायते पितरं सुतः।**
**तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा** ॥ (मनुस्मृतिः–९।१३८)

एवमपत्यं मानवानां श्रेयःप्रेयश्चोभयरूपसाधनमस्ति। अत्र ज्योतिषशास्त्रविज्ञानविधिना जन्माङ्गचक्रमनुसृत्य सन्तानोत्पत्तिर्विचार्यते। जातको यस्मिन् लग्ने जायते तल्लग्नम्, प्रथमभावो वा कथ्यते। तस्माल्लग्नात् क्रमशो द्वादशराशयो द्वादशभावा वेति समुच्यन्ते। सूर्यादयो ग्रहा जन्मसमये यस्मिन् राशौ भवन्ति, ते ग्रहास्तद्राशिकोष्ठे स्थाप्यन्ते। अनया रीत्या जन्माङ्गचक्रं निर्मीयते। लग्नात् पञ्चमभावः पुत्रभावः कथ्यते। तेन सन्तानोत्पत्तिः संविमृश्यते। विषयेऽस्मिन् सर्वेषां ज्योतिर्विदां मतैक्यम्। पञ्चमभावस्य कारको गुरुरस्ति[1]। गुरुश्चतुर्थाष्टमनवमैकादशद्वादशराशिषु तथा गुरुवासरे स्ववर्गे, समुत्तरायणे राशिमध्ये च निम्नराशिस्थितोऽपि प्रथमचतुर्थसप्तमदशमभावगतश्चापि बलवान् भवति[2]। गुरुश्च मङ्गलसाहचर्येण वृद्धिं बलञ्चाप्नोति[3]। यद्यपि गुरुपञ्चमभावस्य कारको भवति, तथापि पञ्चमस्थानस्थितो निष्फलो भवति[4]।

**गर्भाधानविमर्शः**

सुविदितमिदमस्ति यत् स्त्रीपुरुषयोः संयोगेन सन्ततिजन्म। ज्योतिषशास्त्रे स्पष्टमिदं समुपपादितमस्ति यद् गर्भाधानकालाद् भाविन्याः सन्ततेर्ज्ञानं कर्त्तुं शक्यते। सहैव

---

१. जातकपारिजाते–२।५०। २. जातकपारिजाते–२।६५।
३. जा० पा०–२।६०। ४. जा० पा०–२।७६।

च समुचितसमये गर्भाधानं विधाय मनोऽनुकूलां सन्ततिं समुत्पादयितुं शक्यः। प्रत्येकं मासे त्रिदिवसपर्यन्तं स्त्रीणां रजस्रावः सञ्जायते। अस्य कारणं मङ्गलचन्द्रौ प्रदर्शितौ, यतो हि मङ्गलोऽग्नितत्त्वरूपश्चन्द्रश्च जलतत्त्वरूप इति सन्निगदितम्। अग्नितत्त्वात् पित्तं सञ्जायते। एतज्जलपित्तप्रभावादेव रजस्रावो भवति। स्त्रीजन्मराशेर्यद् रजोदर्शने चन्द्र उपचयस्थाने न स्यात्, अर्थात् तृतीयषष्ठदशमैकादशस्थानेषु चन्द्रमा न भवेत्, परञ्च प्रथमद्वितीयचतुर्थपञ्चम-सप्तमाष्टमनवमद्वादशस्थानेषु चेन्दुः स्यात्। गोचरे च मङ्गलग्रहः पूर्णदृष्ट्या पश्येत्, तदैवंभूतं रजो गर्भधारणायालम्। यदि चन्द्र उपचयस्थो भवेद्, अथ च मङ्गलं न पश्येत्, तदा तद् रजो गर्भं न धत्ते। यदि पुरुषस्योपचयराशेश्चन्द्रो भवेदथ च गुरुः पूर्णदृष्ट्या पश्येत्, तदा स्त्रीपुरुषयोः संयोगेन गर्भाधानं भवति।

इदञ्चाप्यवधेयं यत् प्रथमाश्चतस्रो रात्रयो गर्भाधानाय निषिद्धा मन्यन्ते। एते योगा वन्ध्यास्त्रीबालवृद्धनपुंसकेभ्यो न मन्यन्ते[1]। आधानकाले प्रश्नकाले वा सूर्यचन्द्रमङ्गलशुक्रा यदि स्वनवमांशे भवेयुः, तदा निश्चितमेव गर्भो भवति। स्त्रिय उपचये चन्द्र-भौमौ यदि (तृतीये, षष्ठे दशमभावे, एकादशे वा) स्वनवमांशे भवेताम्, तदा गर्भाधानं सम्भवं भवति। यदि गुरुरपि नवमे, पञ्चमे, प्रथमे वा भवेत्, तदापि गर्भाधानं सम्भवितुं शक्यते[2]। एवं वराहमिहिरेणापि लघुजातके निगदितम्। यथा—

बलयुक्तः स्वगृहान्तेष्वर्कसितोपचयर्क्षगौ पुंसाम्।
स्त्रीणां वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति ॥ (लघुजातके, पृष्ठम्–६७)

**ऋतुकालपरिमाणं पुत्रकन्याज्ञानञ्च**

रजोदर्शनस्य प्रथमदिवसतष्षोडशवासरपर्यन्तसमय ऋतुकाल इति कथितः। अत्र चतस्रो रात्रयो निषेकाय निषिद्धाः सन्ति। शेषद्वादशरात्रिषु षष्ठाष्टमदशमद्वादशचतुर्दशषोडशसमसंख्याक-रात्रयः पुत्रप्रदा भवन्ति, तथा पञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदशविषमसंख्याकरात्रयश्च पुत्री-प्रदा भवन्ति[3]। एतत्फलमनेन चक्रेण स्पष्टं भवति। चक्रं यथा—

**संयोगरात्रिफलचक्रम्**

| | | | | | | |
|---|---|---|---|---|---|---|
| रात्रिः | ५ | ७ | ९ | ११ | १३ | १५ |
| फलम् | कन्या | वन्ध्या स्त्री | सुन्दरी कन्या | कुरूपा कन्या | पापिनी कन्या | लक्ष्मीवती कन्या |
| रात्रिः | ६ | ८ | १० | १२ | १४ | १६ |
| फलम् | वंशवर्धकः पुत्रः | पुत्रः | प्रभावशालि-पुत्रः | भाग्यशालि-पुत्रः | धर्मात्मा पुत्रः | सर्वज्ञः पुत्रः |

१. सारावली; २. जा० पा०–३।१३; ३. जा० पा०–३।१८।

ज्योतिषसारे मतान्तरचक्रम्

| रात्रिः | ५ | ७ | ९ | ११ | १३ | १५ |
|---|---|---|---|---|---|---|
| फलम् | पुत्रः | पुत्राभावः | सौभाग्यवृद्धिः | अधार्मिकपुत्रः | पापिनी कन्या | पतिव्रता कन्या |
| रात्रिः | ६ | ८ | १० | १२ | १४ | १६ |
| फलम् | मध्यमः पुत्रः | ईश्वरभक्तः पुत्रः | गुणवान् पुत्रः | उत्तमः पुत्रः | धार्मिकः पुत्रः | दयालुपुत्रः |

**विशेषः**

यदि कदाचित् कश्चित् स्त्रीगमनं चतुर्थरात्रौ कुर्यात्, तदा तु गर्भस्रावोऽल्पायुः पुत्रो वा भवति ।

एवं ज्योतिषशास्त्रे गर्भाधानकालेन भाविसन्ततिविषये बहुतरं ज्ञानं प्राप्यते । सुत-सुता-नपुंसक-यमलादिभाविसन्ततिज्ञानञ्चापि समुपलभ्यते ।

यदि गर्भलग्नात् तृतीयः सूर्यः स्यात्, तदा पुत्रो भवति । लग्नं विहाय यदि विषमस्थाने शनिः स्यात्, तदापि सुत एव सञ्जायते । अन्यथा तु पुत्री जायते । लग्नसूर्यगुरुचन्द्रा विषमराशिषु विषमनवांशेषु च स्युः, तदा तु पुत्रजन्म जायते, विपरीते तु कन्याजन्म सञ्जायते । यदि चन्द्रसूर्यौ विषमराशिषु भवेतां तौ च परस्परं पश्येताम्, तदा तु निश्चप्रचं नपुंसकसन्ततिः सञ्जायते ।

**सन्ततिसमुत्पत्तिकारणविशेषः**

पुरुषवीर्याधिक्ये विषमरात्रिष्वपि पुत्रो भवति, स्त्रीरजस्समाधिक्ये च समरात्रिष्वपि पुत्री भवति । रजोवीर्ययोः समानयोः सतोस्तु नपुंसकसन्ततिः सञ्जायते । अस्यामेव दशायां पुत्रः पुत्री वाऽपि भवितुमर्हति । रजसो वीर्यस्य वा क्षीणे न्यूने गर्भ एव न तिष्ठति । उक्तमपि—

**पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः ।**
**समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥**

( मनुस्मृतौ–३ अध्याये, ४९ श्लोकः )

**गर्भाधानकालेन प्रसवकालज्ञानम्**

गर्भाधानसमये चन्द्रमा यस्मिन् राशौ, तस्य राशेर्द्वादशांशे तावत्संख्याकराशौ, द्वादशांशराशौ, द्वादशांशस्य राशेरग्रे दशमराशौ वा स्यात्, तदा प्रसवो भवति । यथा—गर्भाधानकाले माघशुक्लपञ्चम्यां तिथौ स्पष्टश्चन्द्रमाः–५।२०।१५।१० राश्यादिषु स्यात् । अत्र कन्याया

नवमो द्वादशांशो वृषराशिरभवत् । अत एव वृषान्नवममकरराशेश्चन्द्रमा दशमे मासे कार्त्तिके यदा भविष्यति तदा प्रसवोऽपि भविष्यति[1] ।

**दिवसरात्रिज्ञानम्**

सिंहकन्यातुलावृश्चिककुम्भराशयो दिवससंज्ञका भवन्ति । मेषवृषमिथुनकर्कधनुमकरराशयश्च रात्रिसंज्ञका भवन्ति । मीनराशिश्च सन्ध्याकालिका राशिर्भवति[2] । गर्भाधानकालिकलग्नस्य दिवससंज्ञकानां रात्रिसंज्ञकानां वा राशीनां ये नवांशा व्यतीताः स्युस्तावत्काले दिवसस्य रात्रेर्वा व्यतीते सति जातकजन्म भवति ।

उदाहरणं यथा—गर्भाधानकालिकलग्नम्–३।१०।१२।१५ अस्ति । अत्र कर्कराशिः, तुलाया नवांशोऽभवत् । तुलादिनसंज्ञकनक्षत्रमस्ति, अत एव दिवसे जन्म भविष्यति । इष्टकालस्य ज्ञानमित्थं क्रियते—यदि २०० कलासु दिनमानं प्राप्तं भवति, तदा नवांशभुक्तांशे किम् ? यथोदाहरणे भुक्तांशाः १२।१५, दिनमानम्–२६।३०, तदानुपातेन—$\frac{(२६।०)\times(१२।१५)}{२००}$

१ घटी, ४० पलानि स्वल्पान्तरेणेष्टकालः । एवं प्रश्नकालादपि प्रसवकालस्य ज्ञानं कर्तुं शक्यते[3] ।

**पुरुषस्त्रीणां सन्तानोत्पादकक्षमताविमर्शः**

१. तृतीयेश एव वीर्येश इति निगद्यते । यदि स बलवान् स्यात्, तदा वीर्यं पुष्टं भवति । एवञ्च पुरुषः सन्तानोत्पादनाय समर्थो भवति । यथा दैवज्ञवैद्यनाथेन जातकपारिजाते प्रोक्तम्—

> **वीर्याधिपे भूमिसुतेन युक्ते पापर्क्षगे वीर्यविनाश हेतुः ।**
> **केन्द्रत्रिकोणे ससिते बलाढ्ये वीर्याधिके भोगगुणप्रकाशः ॥**

तृतीयेशो मङ्गलेन सार्धमशुभराशौ यदि स्यात्, तदा वीर्यविनाशो भवति । यदि तृतीयेशः शुक्रेण सह केन्द्रे त्रिकोणे वा स्यात्तदा वीर्यं पुष्टं सञ्जायत इत्याशयः ।

२. (क) यदि पुरुषकुण्डल्यां सूर्यगुरुशुक्राणां राश्यादिनां योगो विषमराशिषु, विषमनवांशेषु च स्यात्तदा पुरुषः पुत्रोत्पादने क्षमो भवति । मिश्रे मिश्रफलम्, समे सति सन्तानोत्पादनेऽक्षमः स्यात् ।

(ख) स्त्रीकुण्डल्यां चन्द्रकुजगुरूणां राश्यादीयोगे समराशिः स्यात् समनवांशोऽपि भवेत्, तदा स्त्रीः सन्तानोत्पादकक्षमा भवति । मिश्रे मिश्रफलं विषमे सन्तानोत्पादनेऽसमर्था भवति[4] ।

३. सूर्यस्पष्टं पञ्चभिः संगुण्य तं पञ्चगुणितचन्द्रेण विशोधयेत् । यत् प्राप्यते फलं सा संततितिथिर्भवति । तिथेरर्द्धं करणः स्यात् । शुक्लपक्षस्य शुभतिथौ प्रयत्नं विनैव संतानलाभः स्यात् ।

---

१. जा० पा० ४३।४४; २. जा० १।१४ ।
३. जा० पा०–३।४३-४४; ४. फलदीपिका–१२।२४ ।

कृष्णे संतानाभावः। विष्टि-शकुन-नाग-चतुष्पाद-किस्तुघ्नकरणानि; ४, ६, ८, ९, १२, १४, १६ इमाश्च तिथयोऽशुभाः सन्ततिबाधिकाश्च भवन्ति।[1]

**सन्तानप्रदायकयोगाः**

१. यदि जन्मलग्ने सूर्यः स्यात्तदा स्वल्पपुत्रः सञ्जायते[2]।

२. शनिगृहे (१०, ११) लग्ने केतुः स्यात्तदा स्थिरं धनं पुत्रञ्च ददाति।

३. बुधे पञ्चमे भावे सति पुत्रवान् भवति।

४. पञ्चमभावगतगुरुरल्पपुत्रं ददाति।

५. पञ्चमभावस्थः शुक्रोऽप्यल्पसुतप्रदायकः।

६. शुक्रो नवमभावस्थः पुत्रवन्तं करोति।

७. द्वादशभावस्थो रविः पुत्रदायको भवति।

८. यस्य सूर्यनवांशे जन्म सोऽपि पुत्रवान् भवति।

९. ज्येष्ठमासस्य जातकोऽपि पुत्रवान् भवति।

१०. यस्य विवाह आषाढमासे भवति, सोऽपि सन्ततियुक्तो भवति[3]।

११. शुक्लपक्षे सञ्जातः सुतोऽपि सुतवान् भवति।

१२. दशम्यां तिथौ समुत्पन्नः पुत्रः पुत्रवान् भवति।

१३. उत्तरभाद्रपदायां रेवतीनक्षत्रे च जातो जातकः पुत्रवान् भवति[4]।

१४. यदि चन्द्रमा वृषराशौ भवेत्तदा कन्या जायते।

१५. यदि जन्मलग्नं वृषः स्यात्, तदा स्वल्पं सन्ततिः सञ्जायते। यदि च सिंहलग्ने जन्म जायते, तदापि स्वल्पपुत्रा भवन्ति।

१६. यदि लग्न-चन्द्राभ्यां पञ्चमभावस्य स्वामी यदि पञ्चमभावे भवेत्, अथवा पञ्चमभावे शुभग्रहा अवस्थिताः स्युस्तदा सन्तानसुखं शोभनं भवति।

१७. पञ्चमेशेन पञ्चमभावेन गुरुणा वा दृष्टोऽवश्यं पुत्रवान् भवति।

१८. लग्नेशे पुत्रभावे स्थिते तथा च पञ्चमेशो गुरुश्च पूर्णबलवन्तौ यदा स्यातां तदा निश्चप्रचमेव पुत्रो भवति[5]।

१९. यदि पूर्णबली गुरुः पञ्चमभावे स्यात् तञ्च लग्नेशः पश्येत्, तदाऽवश्यमेव पुत्रः सञ्जायते।

२०. पञ्चमभावस्य चन्द्रमाः पुत्रदायको भवति।

२१. पञ्चमभावस्थ बुधः स्वल्पसुतप्रदो भवति।

२२. पञ्चमभावस्थ गुरुः सन्तानवृद्धिं विदधाति।

२३. पञ्चमभावस्य शुक्रो विचित्रस्वभाववान् पुत्रान् प्रयच्छति।

---

१. फलदीपिका–१२।१५।
२. जा० पा०–८।५६, होरारत्नम्–३।५।
३. शीघ्रबोधः–१।
३. जा० पा० ९।९१, बृ० सं० १००।११४।
५. जा० पा० १३।१६–१८।

२४. पञ्चमभावस्थितः केतुरल्पपुत्रप्रदाता भवति[1]।

२५. पञ्चमभावस्थिता बुध-गुरु-शुक्रा बहुपुत्रीप्रदायका भवन्ति[2]।

२६. जन्मलग्नाच्चन्द्रमसश्च वा पञ्चमस्थानं शुभग्रहयुक्तं दृष्टं वा स्यादथवा स्वस्वामियुतं दृष्टं वा भवेत्तदा सन्ततिसुखं भवति। अन्यथा तु कदापि न भवति।

२७. गर्भाधानकाले पुरुषस्य दक्षिणनासिकास्वरः स्त्रियाश्च वामस्वरश्चलेत्, तदा पुत्रो भवति। एतद्विपरीतं तु कन्या सञ्जायते[3]।

२८. पञ्चमेशो नवमेशो वा सप्तमे भावे स्याताम्, समराशौ वा भवेताम्, चन्द्रमसा शुक्रेण वा दृष्टौ युक्तौ वा स्याताम्, तदा कन्या भवति।

२९. पञ्चमेशो सप्तमेशो वा विषमराशौ भवेत्, पुरुषग्रहैः सूर्यमङ्गलबृहस्पतिभिर्दृष्टो युक्तो वा, तदा पुत्रो भवति।

३०. पञ्चमेशः स्वराशौ यदा भवेत्, तदाऽल्पः पुत्रो भवति।

३१. पञ्चमेशस्य नवांशपतिः स्वनवांशे स्यात्तदा एकः पुत्रः सञ्जायते।

३२. पुत्रस्थाने क्रमशश्चतुर्थनवमैकादशद्वादशानां गुरुः सन्तति ददाति।

३३. पञ्चमेशः केन्द्रे त्रिकोणे च स्यात्तदा सन्तानसुखं भवति।

३४. बुधः शुक्रश्चन्द्रो वा यदि पञ्चमभावे भवेत्, तदा कन्याः भवन्ति।

३५. पञ्चमभावे मेषे वृषे कर्कराशौ वा गतो राहुः केतुर्वा यदा स्यात्तदा सन्ततिः शीघ्रं भवति।

३६. यदा कर्कस्य चन्द्रमाः पञ्चमभावे भवेत्तदा कन्या, स्वल्प-सन्ततिर्वा सञ्जायते।

३७. शनैश्चरो मकरराशेः कुम्भराशेर्वा पञ्चमः स्यात्, तदा सुतः सञ्जायते।

३८. यदि लग्नेशः प्रथमे, द्वितीये, तृतीये वा भावे भवेत्, तदा प्रथमं पुत्रो भवति, पश्चाच्च कन्या भवति। यदि लग्नेशश्चतुर्थभावे स्यात्तदा तु प्रथमं पुत्री जायते, पश्चाच्च पुत्रः सञ्जायते[4]।

३९. चन्द्र-मङ्गल-शुक्रा द्विस्वभावराशौ धनुराशिपूर्वार्द्धे वा स्युः, तदा सन्ततिः सञ्जायते।

४०. कर्कराशौ शनिरेकाकी पञ्चमभावे स्यात्तदा बहवः पुत्राः सञ्जायन्ते।

४१. कर्कराशौ बुध एकाकी पञ्चमभावे भवेत्तदा स्वल्पपुत्रो भवति।

४२. एकाकी कर्कस्थचन्द्रो यदि पञ्चमे स्यात्, तदा अल्पीयस्यः कन्यका भवन्ति।

४३. उच्चराशेरेकाकी गुरुर्यदि पञ्चमः स्यात्तदा बहुकन्या जायन्ते[5]।

४४. पञ्चमभावस्य चन्द्रमा एकं पुत्रं ददाति[6]।

---

१. होरारत्नम्–३।५।
२. बृ० सं० १०२।५।
३. जातकदीपिका–१२।४८६।
४. जातकाभरणम्–५।५।
५. फलदीपिका–१२।४।
६. मानसागरी–पृ० २८४।

**विलम्बेन सन्तानयोगः**

१. मङ्गलो लग्ने स्याच्चतुर्थस्याष्टमभावस्य वा सूर्ये शुभग्रहदृष्टिः स्यात्, तदा कालान्तरे सन्ततिसुखं भवति ।

२. लग्ने शनिरष्टमे गुरुः पञ्चमे द्वादशभावे वा निर्बलो मङ्गलश्च स्युः, तदा सन्तानसुखं विलम्बेन भवति ।

३. (क) शनिः स्याल्लग्ने गुरुरष्टमे द्वादशे मङ्गलश्च स्युः, तथा स्वल्पसुतराशीनां (२।५।६।८) पञ्चमभावो भवेत्, तदा बहुकालान्तरे पुत्रो भवति ।

(ख) यदि पञ्चमे स्वल्पसुतराशिः स्यात्, तत्र च सूर्यः स्यात्, शनिरष्टमे मङ्गलो लग्ने च स्यात्तदापि पुत्रजन्मनि विलम्बो भवति ।

(ग) एकादशे चन्द्रमा गुरोः पञ्चमपापग्रहा लग्ने चानेकग्रहाः स्युः, तदापि सुतोत्पत्तौ विलम्बो भवति ।

४. केवलं कर्कस्य रविः पञ्चमः स्यादेवं मङ्गलशुक्रौ स्यातां तदा तु द्वितीया पत्नी सन्तति सूते ।

**सन्तानोत्पत्तिसमयज्ञानम्**

१. स्पष्टपञ्चमेशस्य लग्नेशस्य च योगकरणाद् यो राश्येशः स्यात् तस्मिन् तस्माद् वा कोणं गुरुगमने सति पुत्रो भवति ।

२. पञ्चमेशस्य सप्तमेशस्य च योगं कृत्वा यन्नक्षत्रं स्यात्, तस्य दशायां तद्युक्तग्रहस्य दशायाञ्च पुत्रो भवति ।

३. पुत्रभावेशपुत्रकारकपुत्रभावद्रष्टॄणां पुत्रभावस्थस्य च चतुर्णां ग्रहाणां राश्यादियोग-करणे सति यो राशिस्स्यात्, तस्य नवांशराशौ गोचरगुरुगते सति पुत्रो भवति, तथा शनौ तत्र गते सति पुत्रमरणं भवति ।

४. पञ्चमभावे गुरुस्स्यात्, पञ्चमेशः शुक्रेण दृष्टस्स्यात्, तदा द्वात्रिंशत्-त्रयस्त्रिंशद्वर्ष-गतायुषि पुत्रो जायते ।

५. यदा पञ्चमेशः पुत्रकारकग्रहयुक्तः स्यात् केन्द्रे, तदा ३६ वर्षायुषि गते सति पुत्रजन्म भवति ।

६. यदा लग्नान्नवमो गुरुः स्याद् गुरोर्नवमशुक्रो लग्नेशयुक्तो भवेत्तदा ४० वर्षायुषि पुत्रो भवति ।

७. (क) यदा पञ्चमेशः स्याल्लग्ने तदा २२ वर्षायुषि पुत्रः सञ्जायते, सन्तानद्वयञ्च तिष्ठति ।

(ख) यदा अष्टमे पञ्चमेशः स्यात्तदा २५ वर्षगतायुषि, ३६–४० वर्षमध्ये वा सन्ततिः सञ्जायते ।

(ग) पञ्चमेशो द्वादशे भवेत्तदा ४१–४४ वर्षमध्ये पुत्रद्वयं भवितुं शक्नोति ।

(घ) पञ्चमभावं सूर्यः पश्येत्तदा २०–२१ वर्षमध्ये सम्भवतः सन्ततिप्राप्तिः सञ्जायते[1]।

८. (क) लग्नेशसप्तमेशपञ्चमेशगुरुपञ्चमभावद्रष्टा ग्रहा एषां दशायामन्तर्दशायां वा पुत्रो भवति।

(ख) पञ्चमेशस्य राशेर्नवांशाद् वा त्रिकोणस्य गुरुः समागच्छेत्, तदा सन्ततिः सञ्जायते।

(ग) लग्नेशो गोचरे पञ्चमेशेन योगं कुर्यान्निजोच्चराशिं स्वराशिं वा समापतेत् पञ्चमभावे पञ्चमेशराशिं वा गच्छेत्, तदा सन्ततिसमुत्पत्तिसमयो भवति।

९. (क) लग्नेससप्तमेशपञ्चमेशानां राश्यंशकलाविकलानां योगं विधाय, योगे पुनः प्राप्तराश्यंशकलाविकलानां प्राप्तनक्षत्रस्य स्वामिमहादशायां यदा पञ्चमभावस्थग्रहः, पञ्चम-भावदृष्टो ग्रहो वा पञ्चमेशान्तर्दशा वा स्युः, तदा सन्ततिर्भवति।

(ख) पञ्चमेशः पञ्चमेशस्थितराशिस्वामी, पञ्चमेशस्य नवांशस्य स्वामी, गुरुर्गुरुस्थित-राशेः स्वामी, गुरुनवांशस्य स्वामी वा स्युः, एतेषु च यः सर्वाधिकबली स्यात् तस्य दशान्तर्दशयोः सन्ततिलाभो भवति।

(ग) गुरोः पञ्चमराशेः स्वामी यस्मिन् राशौ नवांशे च स्यात्, तस्माद्राशेर्नवांशाद् वा त्रिकोणे गोचरस्य गुरौ जाते सति सन्तानप्राप्तिः सञ्जायते[2]।

**सन्ततिसङ्ख्याज्ञानम्**

१. पञ्चमभावे यावतां शुभग्रहाणां दृष्टिस्स्यात्, तेषां दृग्बलयोगकृते सति, दृग्बल-संख्यायाः पञ्चमभावस्य गतनवांशसङ्ख्यया गुणं कृत्वा गुणनफलसंख्यायां शतद्वयेन भागे कृते सति या भागफलसंख्या समायाति तत्संख्यातुल्यसंख्याकाः सन्ततयो भवन्ति।

२. स्पष्टगुरुचन्द्रसूर्याणां योगे कृते सति, प्राप्तराशेर्यो गतनवांशः स्यात्, तावत्संख्यातुल्याः सन्ततयो भवन्ति।

३. पञ्चमेशनवमेशचतुर्थेशानां स्पष्टराशेर्योगराशेर्गतनवांशसंख्यातुल्यसंख्याकपुत्रा भवन्ति।

४. ४, ५, ९ भावस्थितग्रहाणां योगराशेर्गतनवांशसंख्यातुल्यसन्ततयः सञ्जायन्ते[3]।

५. पापग्रहाः ६, ४ भावस्थिताः, सुतेशलग्नेशाभ्यां सार्धं परमोच्चेषु स्थानेषु वर्तमानः सुतभावकारकः शुभग्रहयुक्तश्च स्यात्तदा दशपुत्रा भवन्ति।

६. गुरुः परमोच्चः, धनेशो राहुणा सह, भाग्येशश्च नवमः स्यात्तदा ९ पुत्राः सञ्जायन्ते।

७. पञ्चमभावात् पञ्चमे शनिः, पञ्चमे पञ्चमेशश्च यदा स्यात्तदा सप्त पुत्रा भवन्ति[4]।

८. (क) कुम्भराशिशनिः पञ्चमभावे स्यात्तदा पञ्च पुत्रा भवन्ति।

(ख) मकरराशिशनिः पञ्चमभावे स्यात् तदा त्रयः पुत्रा जायन्ते।

(ग) मकरराशेर्मङ्गलः पञ्चमभावे स्यात्तदा ३ संख्याकसुताः सञ्जायन्ते।

---

१. जातकदीपके–९।३२७। २. फलदीपिका–१२।२५–२६।
३. जातकपारिजाते–१३।४६-४८। ४. बृहत्पाराशरे–द्वा० मा० ९६-१००।

(घ) पञ्चमभावे केवलं गुरुः स्यात् तदा पञ्चसंख्याकपुत्राः समुत्पन्ना भवन्ति[१]।

९. (क) पञ्चमभावे यावत्पुरुषग्रहाणां दृष्टिस्स्यात्, तावत्संख्याकाः पुत्रा जायन्ते, यावन्तश्च स्त्रीग्रहाणां दृष्टिः स्यात्, तावत्संख्याकाः कन्या भवन्ति।

(ख) सन्ततिभावे यावद्राशिसंख्या भवेत् तावत्संख्याकसन्ततयो भवन्ति।

(ग) पञ्चमभावे यावद्राशिसंख्या नवांशो भवेत्, तावद्राशिसंख्यातुल्याः सन्ततयो भवन्ति[२]।

**सन्तानोत्पत्तिसमयज्ञानम्**

१. लग्नेशसप्तमेशपञ्चमेशानां राश्यादियोगेन यन्नक्षत्रं भवति, तस्य नक्षत्रेशस्य दशायां पञ्चमेश-पञ्चमस्थ-पञ्चद्रष्टृ-ग्रहाणां वान्तर्दशायां संतानो जायते।

२. गुरुणा पञ्चमराशीपस्य राशितो नवांशतो वा त्रिकोणे गोचरगतगुरुः सन्तानप्रदो भवति।

३. पञ्चमेशगुरुस्थितराशि अनयोर्नवांशयोर्मध्ये वा सबल-ग्रहदशायां सुतोत्पत्तिर्भवति[३]।

**सन्तानोत्पत्तिबाधकयोगाः**

१. कन्याराशेः सूर्यो लग्ने, मकरराशौ भौमः पञ्चमभावे च यदि स्यात्, तदा तु जातको म्रियते[४]।

२. (क) यदि सप्तमेशः पञ्चमभावे स्यात्तदा तु पुरुषः पुत्ररहितः पत्नीरहितो वा भवति।

(ख) यदि पुत्रभावात् ८, ६, १२ भावस्थाः पापग्रहाः स्युस्तदा सन्ततिर्न भवति।

(ग) यदि राहुः पञ्चमस्थाने पञ्चमेशश्च दुष्टस्थाने स्यात्, तदा पुरुषः पुत्रहीनो भवति।

(घ) यदा लग्नेशः पुत्रभावस्थः पुत्रेशश्च लग्नस्थः स्यात् तदा तु दत्तकपुत्रस्तिष्ठति।

३. यदि पुत्रेशधनेशौ निर्बलौ स्याताम्, पापग्रहाश्च पुत्रभावं पश्येत्, तदा त्वनेकासु स्त्रीषु भवत्स्वपि सन्ततिर्न भवति।

४. चन्द्रमा दशमे, शुक्रः सप्तमे, पापग्रहश्च चतुर्थे स्थाने स्युस्तदा तु सन्ततिनाशो भवति।

५. लग्नेशः षष्ठभावेऽष्टमे वा स्यात्, पुत्रेशः पापग्रहयुक्तः, शत्रुगृहस्थो नीचस्थग्रहेण वा दृष्टः स्यात्तदा तु पुत्रहानिर्भवति।

६. यदि पापग्रहाः १, ७, ९, १२ राशिषु शत्रूणां वर्गेषु वा स्युस्तदा तु वंशविच्छेदो भवति।

७. गुरुलग्नेशसप्तमेशपञ्चमेशा यदि निर्बलाः स्युस्तदा तु पुत्रा न तिष्ठन्ति[५]।

---

१. जातकालङ्कारः--२।१४। २. जातकाभरणम्--पञ्चम०--६-८।

३. फलदीपिका--१२।२७।

४. जा० पा० १२।८, बृहज्जातकः--२३।१। ५. जा० पा० १३।२०।

८. यदि पापग्रहाः पुत्रस्थानस्थाः स्युः, पुत्रेशो नीचराशौ स्यात् शुक्रग्रहश्चैते न पश्येयुः, तदा तु सन्ततिहीनो भवति मानवः।

९. गुरुलग्नचन्द्रेभ्यः पञ्चमभावस्थाः पापग्रहाश्शुभग्रहयुताः, यदि च दृष्टा न स्युः, तदा सन्ततिर्न भवति। तात्पर्यमिदं यदत्रानपत्यता भवति।

१०. पुत्रस्थाने पापग्रहाः स्युः, पुत्रेशः पापग्रहमध्ये स्याच्छुभग्रहदृष्टियोगश्च न भवेत्तदा सन्तानाभावो भवति।

११. पापग्रहमध्ये यदि गुरुः स्यात्, पुत्रेशो निर्बलो भवेत्, शुभग्रहेण दृष्टो युतश्च न स्यात्तदापि सन्तानाभावो जायते।

१२. मीनस्य गुरावल्पसन्ततियोगः, धनुष्यगुरौ कष्टेन सन्ततिरुच्चगुरौ कुम्भस्य च गुरौ सन्ततिराहित्यं भवति।

१३. पञ्चमेशो यत्स्थाने समुपविष्टः स्यात्तस्माच्च षष्ठद्वादशयोः स्थानयोर्यदि पापग्रहाः स्युः, तदापि सन्तानाभावो भवति, सन्ततिर्वा न जीवति[1]।

१४. यदि सप्तगः शुक्रो दशगश्चन्द्रश्चतुर्थे च पापग्रहाः स्युः, तदा सन्ततिर्न भवति।

१५. हर्शले पञ्चमभावे सन्तानाभावो भवति[2]।

१६. पञ्चमभावस्य नेपच्यूनो यदि स्यात्तदापि सन्ततिसुखं न भवति।

१७. चित्राश्लेषाशतभिषाज्येष्ठामूलकृतिकापुष्यनक्षत्रेषु समुत्पन्ना स्त्री वन्ध्या, विधवा, मृतसुता, परित्यक्ता, निर्धना वा भवति[3]।

१८. (क) पञ्चमभावस्य मङ्गलः सन्तानहीनं करोति, स्त्रीजातके विशेषकरः।

(ख) पञ्चमभावस्य रविः सन्तानहीनं करोति।

(ग) पञ्चमभावस्थकेतुः स्याच्छुभग्रहश्च न पश्येत्तदा तु गर्भोऽपि न तिष्ठति।

(घ) कश्चिदपि ग्रह एकाकी शुभदृष्टिरहितस्च पञ्चमे स्यात्, तदापि सन्ततिर्न भवति[4]।

१९. (क) पञ्चमभावे धनुराशिर्मीनराशिर्वा स्यात्तदा सन्ततिर्न जायते।

(ख) पञ्चमभावे यदि गुरुः स्यात्तदा सन्ततिमरणं भवति।

(ग) यदि पञ्चमे गुरुदृष्टिः स्यात्तदा सन्तानसुखं भवति। तदुक्तम्—

झषधनुर्धरपञ्चमभावगे प्रशवसौख्यफलं न च दृश्यते।
मृतप्रजः खलु पञ्चमगे गुरौ तदिह दृष्टिफलं शुभमश्नुते॥

(मानसागरी—२८६।१६)

२०. पञ्चमभावे मङ्गलः सन्तानहीनं करोति[5]।

२१. पञ्चमे शनिः सन्तानपक्षेण हीनं करोति[6]।

२२. पञ्चमराहुः सन्ततिहीनं करोति।

---

१. जातकाभरणे—५।१४; २. जातकदीपिका—१०।३६९।
३. फलदीपिका—११।९; ४. मानसागरी—२८४।२-६।
५. होरारत्नम्—३।५; ६. चमत्कारचिन्तामणिः—७।५।

२३. पञ्चमेशः ६, ८, १२ भावे स्यात्तदा सन्तानाभावो भवति[१]।

२४. षष्ठभावे पञ्चमेश-लग्नेशौ भौमराशौ स्यातां तदा प्रथमसन्ततिर्नष्टा भवति, स्त्री च काकवन्ध्या भवति।

२५. यदि सुतेशः पञ्चमभावे स्यात्तदा तु जातकस्य पुत्रो न जीवति।[२]

२६. पञ्चमस्थौ सूर्यमङ्गलौ कन्यां नाशयतः, राहुः सन्ततिमरणं करोति, शनिरुग्ररोगं ददाति, चन्द्रमा कन्याया विनाशं करोति।[३]

२७. पञ्चमसूर्यः पुत्रहीनं करोति।[४]

२८. शुक्रमङ्गलचन्द्रा यदि धनुराशेरुत्तरार्धे स्युः, तदा सन्ततिर्न भवति।[५]

२९. यदि सूर्यो नीचराशेर्नीचांशे (६।१०) स्यात्, तदा जातकः श्रेष्ठकुलस्य भवन्नपि लक्ष्मीहीनः पुत्रहीनः स्त्रीहीनश्च जायते।

३०. ज्येष्ठामूलनक्षत्रयोः सन्धेरेकः प्रहरोऽभुक्तमूलो भवति, तस्मिंश्च जातो जातकः पुत्ररहितो भवति।

३१. यदि गुरोः पञ्चमे पापग्रहः स्यात्, स गुरुरपि लग्नात् पञ्चमः स्यात्तदा सन्ततिर्न भवति।[६]

**सन्तानोत्पत्तिबाधकारणानि**

१. पापग्रहः पुत्रभावं यदि पश्येत्तदा देवशापेन सन्तानोत्पत्तौ बाधा भवति।

२. यदि पुत्रभावः षष्ठेशेन दृष्टो युतो वा भवेत्तदा तु ब्राह्मणशापेन सन्तानोत्पत्तौ बाधा जायते।

३. मङ्गलयुक्तं पुत्रेशं षष्ठेशः पश्येत्, परञ्च शुभग्रहो न पश्येत्तदा शत्रुदोषेण सन्ततिसमुत्पत्तौ बाधा समायाति।

४. यदि पापग्रहो नवमे स्यात्, पञ्चमेशः शनियुक्तः स्याद्, गुलिकः त्रिकोणे भवेत्तदा पितृशापेन सन्तानसमुत्पत्तौ बाधा भवति।

५. चतुर्थभावः पापग्रहयुक्तः पुत्रेशश्च शनियुतस्स्यात्, द्वादशमष्टमञ्च स्थानं पापयुक्तं भवेत्तदा मातृदोषेण पुत्रनाशो भवति। अर्थात् सन्तानोत्पत्तौ बाधा जायते।

६. यदि पञ्चमस्थानं राहुणा केतुना च युतं दृष्टं वा भवेत्, बलरहितञ्चापि भवेत्, पञ्चमेशश्चापि निर्बलो जायेत, तदा सर्पदोषेण सन्ततिबाधा भवति।

७. गुरुपुत्रेशसप्तमेशमङ्गला यदि साहचर्यं भजेरन्, तदा दुष्टदेवपीडया सन्तानबाधा भवति।[७]

---

१. बृहत्पाराशरः–७६।६, बृह० जा० २०।९;

२. बृ० पा०–३८; ३. बृहत्संहिता–१०२।५; ४. बृहज्जातके २०।२।

५. जातकाभरणम्—५।५; ६. जातकालङ्कारः–२।१४।

७. जातकपारिजातः—१३।३२–३७।

**दत्तकपुत्रयोग:**

१. यदि पुत्रेशस्त्वस्तं गच्छेत्, पुत्रभावे च वलिनो ग्रहाः स्युस्तदा दत्तकपुत्रयोगो भवति ।

२. चन्द्रः पापग्रहगृहे स्यात्, पुत्रेशलग्नेशौ च नवमे स्यातां तदा दत्तकपुत्रयोगो भवति ।

३. यदि पुत्रेशः समराशेश्चतुर्थस्य वा स्यात्, स च शनेर्नवांशे स्यात्तदा दत्तकपुत्रयोगः सञ्जायते ।

४. पुत्रेशः समराशेर्नवांशे शनिश्चरस्य नवांशे वा स्यात्, सूर्यश्च चन्द्रमसा युक्तस्स्यात्तदा तु दत्तकपुत्रयोगो भवति ।

५. यदि पुत्रेशः शनिश्चरस्यांशे भवेत्, गुरुशुक्रौ च स्वराशेः स्यातां तदा प्रथमदत्तकपुत्रस्य पश्चात्, स्त्रियाः पुत्रो भवति ।[1]

**सन्तानप्राप्तिसमुपाया:**

१. लग्नात् पञ्चमभावं पुरुषसंज्ञकग्रहः पश्येत्तत्र स्थितो वा स्यात्तदा जातकः पुरुषदेवतां पूजयेत् । यदि समराशिः पञ्चमे स्यात् पञ्चमे च शुक्रश्चन्द्रमा वा भवेत्, तत्स्थानं वा पश्येत्, तदा तु स्त्रीदेवताया आराधनां कुर्यात् । यदि पञ्चमे सूर्यस्स्यात्तदा सूर्यस्य, चन्द्रशुक्रौ स्यातां तदा गौर्याः, मङ्गलस्स्यात्तदा कार्त्तिकेयस्य, बुधः स्यात्तदा विष्णोः, वृहस्पतिस्स्यात्तदा शङ्करस्य, शनिश्चरो राहुः केतुर्वा स्युस्तदा त्वन्यक्षुद्रदेवताया आराधनाञ्च कुर्यात् ।

तदुक्तम्—

**लग्नाद्यात्मनि पुंग्रहे क्षितयुते पुंदेवताराधनं**
**युग्मे शुक्रनिशाकरे क्षितयुते स्त्रीदेवतामिच्छति ।**
**भानौ भास्करमुख्यमिन्दुसितयोर्गौरीं कुमारं कुजे ।**
**विष्णुश्चन्द्रसुते गुरौ शशिधरं शन्यादियोगापरान् ॥**

(जातकपारिजाते–१३।२)

२. सन्तानप्राप्तिर्धर्माचरणेन भवति । बुधशुक्रचन्द्रबाधकाः स्युः, तदा रुद्राभिषेकेण शिवार्चनेन वा, गुरुप्रतिवन्धको यदि स्यात्तदा यन्त्रमन्त्रौषधिप्रभावेण, मङ्गलः, राहुः, केतुर्वा यदि पृथक् पृथक् प्रबाधकाः स्युः, तदा वेदविधिना स्वकुलदेवतासमाराधनेन, बुधो गुरुर्वा नवमेशो वा प्रतिवन्धकाः स्युः, तदा पार्वतीपूजानुष्ठानेन सन्ततिप्राप्तिर्भवति । (जातकालङ्कारे–२।१६)

३. आचार्यमन्त्रेश्वरस्य मतमस्ति यत् समुद्रस्नानेन, हरिवंशपुराणादिसत्कथाश्रवण-कीर्तनेन, शिवपूजया, विष्णुव्रतेन, दानेन, श्राद्धेन, नागप्रतिष्ठादिकरणेन च सन्ततिर्भवति । तदुक्तम्—

---

१. जातकपारिजाते—दत्तकयोगाः ।

सेतुस्नानं कीर्तनं सत्कथायाः पूजां शम्भोः श्रीपतेः सद्व्रतानि ।
दानश्राद्धं कर्जनागप्रतिष्ठां कुर्यादेतैः प्राप्नुयात् सन्ततिं सः ॥

(फलदीपिकायाम्–१२।२४)

एवं विविधयोगाध्ययनादिभिः कस्याश्चिदपि सन्ततेर्भविष्यवाणीं कर्तुं शक्यते । ज्योतिषशास्त्रं महाशास्त्रमस्ति । तत्र चानेकमतमतान्तराण्यपि सन्ति । अत्र तु केवलं जन्मकुण्डल्याधारेणैवोत्पन्नयोगानां चर्चा कृता । अत्र प्रस्तुतनिबन्धे सामुद्रिकलाक्षणिकग्रन्थानामुल्लेखो नास्ति । प्रायः सर्वैराचार्यैर्जन्मकालिकलग्न-ग्रहस्थितिरेव प्रमुखतया गृहीता । अत एवास्माकमपि तदेव लक्ष्यमस्ति । सन्ततिविमर्शार्थं तु पर्याप्ता विषयसामग्री प्राप्यते, परञ्च निबन्धविस्तरभयादत्रैव विरम्यते ।

● ● ●

# भवभूतेर्दृष्टिः

डॉ० इन्द्रदेवद्विवेदी
साहित्यविभागाध्यक्षः,
श्रीरामानन्दपीठसंस्कृतमहाविद्यालयः, कर्णघण्टा, वाराणसी ।

भवभूत्युपनामायं महाकविर्ज्ञाननिधेः शिष्योऽस्ति । हरिषेणकालिदाससमसामयिकः स्वजन्मना विदर्भेषु स्थितं पद्मपुरं नाम नगरं पवित्रं कृतवान् । अस्य त्रीण्यपि नाटचानि उज्जैन-स्थितकालप्रियानाथस्य (आधुनिकमहाकालस्य) यात्रायामभिनीतानि सन्ति । पूर्वपुरुषाणां प्रभावेणानुवंशिकी प्रतिभापि महाकवेः काव्यविकासे योगदानं कृतवती । अस्य पाण्डित्यं सहृदय-त्वञ्च परस्परं प्रतिस्पर्धेते[1] ।

नाटचपरम्परायां भवभूतेर्विशिष्टं स्थानमस्ति । संस्कृतसाहित्ये तु स सूर्यसदृशस्तेज-साकुलीकृतकविनक्षत्रमण्डलः प्रतिभासते । तस्येदं महत्त्वमक्षुण्णं विद्यते । नामसादृश्येन स्थानानां निश्चयो भवितुं नार्हति । अत एव संस्कृतकवीनां भौगोलिकोऽनिश्चयः स्वीक्रियते । एवमेवैकस्यै-वाभिधेयस्य बहवः पर्यायवाचिनोऽपि शब्दाः सन्ति । तेषां प्रयोगेणापि भ्रमस्य स्थानं जायते ।

चिन्तनशीलोऽयं महाकविस्तत्कालिकसमाजस्य एवं प्रति व्यवहारेणैव प्रतिष्ठां प्राप्तवान्[2] । अस्य काव्यपद्धतौ दार्शनिकी दृष्टिः प्रशंसनीया विद्यते । अस्य दार्शनिक्यां दृष्टौ सर्वेषां भारतीय-दार्शनिकानां सिद्धान्तानाञ्च संकेतोऽभिप्राप्यते[3]; तथापि बौद्धदर्शनस्याद्वैतवादस्य च प्रभावोऽ-

---

१. यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं नहि ततः कश्चिद् गुणो नाटके ।
यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥ (मालतीमाधवे १।१०)

२. ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ (मा० मा० १।६)

३. लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतो भुवः पञ्चभिः-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ (मा० मा० ५।१०)

नीलत्वं तदात्मतया संबद्धत्वम् । विषयविषयिणोस्तदात्मरूप एव सम्बन्ध इति योगाचारमतेनोक्तम् । प्रतिबिम्बितेवेति सांख्यमतोपदर्शनम् । लिखितेवेति सौत्रान्तिकमतोप-दर्शनम् । उत्कीर्णरूपेवेति विषयाकारेण चैतन्यपरिणाम इहोत्कीर्णरूपता । अतः त्रिदण्डरूपम् । प्रत्युप्तेवेति पातञ्जलमतम् । वज्रलेपघटितमेवेति नैयायिकमतम् । अन्तर्निखातेवेति विज्ञानादिमतोपदर्शनम् (टीकाकारो जगद्धरः)

स्योपरि प्रगाढोऽस्ति[1]। अस्य साहित्ये भारतीयदर्शनानां सर्वा विशेषता अनुस्यूता विद्यन्ते। महाकविरयं रामस्य भक्तोऽस्ति[2]। अस्य रामः परात्परं ब्रह्मास्ति[3]। अत एवायमन्येषां देवानामपि वन्दनादिकार्यं करोति, यतो हि रामस्यैव तेऽप्यंशाः सन्ति। काव्यमपि तस्यैव कलाऽस्ति[4]। भवभूतेः करुणा जीवनस्य सुखदुःखयोरनुकरणमस्ति। तस्य करुणायां शोकस्यानुकरणेन सहृदयानानन्दयितुमेकः प्रयासोऽस्ति। अत एव करुणायाः साम्राज्ये सुखस्यानन्दस्य वा स्थानमुच्चतमं विद्यते[5]।

भवभूतेः कविता दार्शनिकी विद्यते। दर्शने सदा व्यक्तिं विहाय सामान्यस्य विचारः क्रियते। दर्शने सामान्यमेव काव्ये सहानुभवपदं प्राप्नोति। कविरीदृशं भावं प्रस्तौति यदेकस्यां परिस्थितौ सर्वेऽपि तत्सदृशमेव कार्यं कृतवन्तः, कुर्वन्ति, करिष्यन्ति च। इदमेव कवेरस्य सार्वकालिकत्वमस्ति यत् साहित्यस्य सर्वप्रथमं लक्षणमस्ति। यस्मिन् जगति वयं वर्तामहे, तस्य द्वे रूपे स्तः, आन्तरिकं बाह्यश्च। आन्तरिके रूपे दर्शनस्य दृष्टिस्तिष्ठति। तदेव वास्तविकं चिरस्थायि च रूपमस्ति बाह्यापेक्षया। महाकविनाऽऽन्तरिकस्य तत्त्वस्य पूर्णरूपेण स्थापना स्वकृतिषु विहिता। अत एवास्य कृतयो निश्चयरूपेण चिरस्थायिन्यो भविष्यन्ति।

---

१. विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः॥ (उ० रा० च० ६।६)

२. प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत्पावनं रघुपतेः प्रणिनाय वृत्तम्।
भक्तस्य तत्र समरंसत मेऽपि वाच-
स्तत्सुप्रसन्नमनसः कृतिनो भजन्ताम्॥ (महावीरचरितम्–१।७)

३. इदं हि तत्त्वं परमार्थभाजामयं हि साक्षात् पुरुषः पुराणः।
त्रिधा विभिन्ना प्रकृतिः किलैषा त्रातुं भुवि स्वेन सतोऽवतीर्णा॥ (म० च० ७।२)

४. इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
वन्देमहि च तां देवीममृतामात्मनः कलाम्॥ (उ० रा० च० १।१)

५. अलौकिकविभावत्वं नीतेभ्यो रतिलीलया।
सदुक्त्या च सुखं तेभ्यः स्यात् सुव्यक्तमिति स्थितिः॥ (भक्तिरसामृतसिन्धुः–२।५।१०६)
करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्॥
किञ्च तेषु यदा दुःखं न कोऽपि स्यात् तदुन्मुखः।
तथा रामायणादीनां भविता दुःखहेतुता॥
हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।
सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः॥
अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः। (साहित्यदर्पणम् ३।४-८)

भारतीयानां विचारकाणां कृतयश्चिरस्थायिन्य एव भवन्ति । अन्यथा तु तासां समुत्पादनमेव नाभिमतं भारतीयैः । शान्तिपूर्णवातावरणे भौतिकसमस्यया विरहितो जन आध्यात्मिकचिन्तने समर्थो भवति, तथा तस्य कृतयोऽवश्यमेव लोककल्याणकामिन्यो भविष्यन्ति । भवभूतेराध्यात्मिके चिन्तने जीवनस्य सार्थक्यं निहितमस्ति । लोकास्तच्चिन्तनेनैव स्वकीयां भौतिकीं समस्यामपि दूरीकरणे समर्था भविष्यन्ति ।

वेदा भारतीयकलाकाराणां विचारकाणाञ्च कृते निधयः सन्ति । वेदेषु सर्वमभिमतं ज्ञानं निहितमस्ति सर्वेषां कृते[1] । यया दृष्ट्या कश्चिद् वेदेषु प्रविष्टो भविष्यति तस्या दृष्टेरेव प्राधान्यं तेषु स प्राप्स्यति । ब्रह्मसदृशो वेदस्यापि महिमाऽप्रमेयोऽस्ति । तेषां वेदानामाधारेणैव निष्पादिता भवभूतेः कृतयो भारतीयानां मानसपटले सर्वदा नृत्यमानाः स्थास्यन्ति । वैदेशिकानां जनानां कृतेऽस्य महानुभावकताऽपि चिरस्मरणीया भविष्यति । यतो ह्यस्य वैदिकं ज्ञानमक्षुण्णमस्ति ।

समन्वयस्य भावनया महाकविरयं सर्वानन्यान् कलाकारान् विचारकान् चातिशेते । अस्य समन्वयपद्धतिर्विचित्रा, अनुभवैकगोचरा जीवनसहगामिनी चास्ति । जीवनस्य प्रतिकूलायां परिस्थितौ कथमाचरणीयमित्यस्य प्रश्नस्योत्तरं भवभूतिसाहित्ये आञ्जस्येन प्राप्यते ।[2] अन्वेषकस्य बुद्धेरावश्यकता विद्यते, अत्र ज्ञानकोशस्य न्यूनता नास्ति । भवभूतिसाहित्येन जीवनस्य मार्गनिर्देशनं प्राप्यते । मानवजीवनगतस्य लक्ष्यस्य प्राप्त्यै यानि साधनानि भवभूतिना निरूपितानि, तान्येव भारतीयपथप्रदर्शकेषु साहित्येषु दृष्टिगोचरतां गच्छन्ति । भवभूतिना ज्ञानस्य कर्मणो भक्तेश्च सामञ्जस्यं प्रतिपादितं स्वकीयेषु नाटचग्रन्थेषु । एतदीयदर्शने ज्ञानकर्मभक्तयः क्रमशो ब्रह्मज्ञानकर्त्तव्यहृदयकारुण्यधाराः सन्ति ।

अवतारवादो भारतीयसाहित्यस्योत्कृष्टतमः सिद्धान्तोऽस्ति । भवभूतिमहोदयानुसारेणापि परात्परब्रह्मरूपो रामः स्वकीयावतारेण कर्त्तव्यपथं प्रदर्शयति, तदुन्मुखानां जनानां कृते । आदर्शजीवनस्य स्थापना संसारस्य सार्थकतासिद्धिस्तथा कर्त्तव्यस्य पालनमस्यावतारस्योद्देश्यमस्ति । भवभूतिः प्रकृत्या साकमपि आत्मिकं सम्बन्धं स्थापयति[3] । अत एव प्रकृतेर्बृहत्प्राङ्गणेऽस्य नाटचस्य विकासो जातः । प्रकृतिरस्य चिरसहचरी विद्यते । प्रकृतावपि चेतनाया विकासोऽस्ति । साऽपि मानवमनसि स्थितस्य भावस्य संज्ञात्री विद्यते । अत एव करुणयाप्लुता सती ग्रावापि

---

१. नमोऽस्तु तस्यै श्रुतये यां दुहन्ति पदे पदे ।
ऋषयः शास्त्रकाराश्च कवयश्च यथामति ।। (काव्यमीमांसा अ० ७)

२. सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ।। (उ० रा० च० १।५)

३. यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरीपरिसरस्य गिरेस्तटानि ।। (उ० रा० च० ३।८)

रोदिति[1]। प्रकृतेः कठोररूपमपि जीवनाय तथैवोपयोगि विद्यते, यथा कोमलं रूपम्। प्रकृतेर्द्वेऽपि रूपे जीवनस्य द्वौ पक्षावभिव्यक्तौ।

भवभूतेरनुसारेण सौन्दर्यस्य मुख्यताऽऽभ्यन्तरत्वे विद्यते, न तु बाह्यत्वे। बाह्यं तु प्रदर्शनमात्रमेव भवति। प्रदर्शनेनान्तर्मनः कदाप्याकृष्टं न भविष्यति। आन्तरिको विह्वलतातदनुसारेणान्तर्मुखीभावायावश्यकं तत्त्वमस्ति। तदवस्थायामेव परमात्मनः साक्षात्कारं कर्त्तुं कोऽपि समर्थो भवितुमर्हति। भवभूतिरस्य जगतो निर्मितौ ब्रह्म एव निमित्तमुपादानं स्वीकरोति। अस्य जगतोऽनित्यत्वमस्ति। ब्रह्मणः स्वरूपस्याधिगम एव जीवनस्यान्तिमं लक्ष्यमस्ति। ब्रह्मगुणत्रयमेवोपादानकारणरूपेण जगति परिणमति। सत्त्वरजस्तमोगुणा एवैतदीयदर्शने सत्यं शिवं सुन्दरमिति संज्ञां भजन्ते। अस्यैव त्रिकस्य मूलं सच्चिदानन्दोऽपि विद्यते।

इत्थञ्च भवभूतेर्दृष्टौ निर्माणस्य निर्वाणस्य महत्त्वमस्ति। जीवनस्यैहिकं लक्ष्यं निर्माणम्, तथा पारलौकिकं लक्ष्यं निर्वाणमस्ति। निर्वाणमेव मोक्षमिति कथ्यते। जीवनमुत्थानपतनयोरधिकरणमस्ति। पतनावस्थया मनुष्यः शिक्षणं गृहीत्वोत्थानं प्राप्नोति। कर्मणः फलं भवतीति सिद्धान्तस्य प्रतिफलेनेत्थं भवितुमर्हति। पाश्चात्यविदुषां मतेन दर्शनं युगधारायाः परिचायकं भवति। युगसंघर्षादेव दर्शनस्योत्पत्तिर्जायते। भवभूतेर्दार्शनिकी दृष्टिरपि तद्युगधाराया दृष्टिरस्ति। भवभूतेर्युगे कया दृष्ट्या जीवनस्य मार्गनिर्धारितं जायते इत्यस्य संकेतो भवभूतेर्नाटचत्रयेपूपलभ्यते।

भारतीया संस्कृतिरध्यात्मसंपृक्ता विद्यते। बाह्यसज्जा तु सभ्यताया द्योतिकाऽस्ति। भवभूतेः साहित्ये संस्कृतेः सभ्यतायाश्च पूर्णं दिग्दर्शनमुपलभ्यते। सभ्यता तथा तत्समानार्थिका कलासंस्कृतेरेव समुद्भूता। आत्मनः कलैव कवितेति कथ्यते। सैव कवेर्भारती विद्यते, या च ब्रह्मणो निर्मितिमप्यतिशेते[2]।

भवभूतेरनुसारेण जीवनं साध्यं न विद्यते, किन्तु कर्त्तव्यं साध्यं विद्यते। भवभूतिसाहित्यमेव कर्त्तव्यप्रेम्णोः सङ्घर्षोऽस्ति। कर्मणः फलप्राप्तौ भाग्यं द्वारमस्ति। स्वर्गनरकयोर्विश्वासो महाकवेरस्य नाट्येऽन्तर्भूतोऽस्ति[3]। भवभूतेर्दृष्ट्या धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मोक्षस्य प्राधान्यं विद्यते, किन्तु पारमार्थिकदृष्ट्या, व्यावहारिकदृष्ट्या तु धर्मस्य प्राधान्यमस्ति। धर्मप्रवर्तितस्यैवार्थस्य कामस्य वा पुरुषार्थत्वमस्ति। अन्यथोभावपि पापमूलकावेव। धर्मांशेनैव तयोरुपयोगिता सिद्ध्यति।

---

१. अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥ (उ० रा० च० १।२८)

२. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधति भारती कवेर्जयति॥ (काव्यप्रकाशः १।१)

३. यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः॥ (उ० रा० च० २।१२)

भवभूतिसाहित्यस्य सर्वोत्कृष्टमवदानमस्य करुणया करुणा विद्यते। करुणायाः स्थायिभावः शोक एव काव्यस्य आत्माऽस्ति। करुणरस एवैको रसोऽस्ति।[1] काव्येषु चमत्कारोऽपि करुणयैवागच्छति। करुणा सर्वेषां जीवानां मूले स्थिता विद्यते। सर्वे विभावा अनुभावा व्यभिचारिणश्च करुणरसस्य विभावादयो भवितुमर्हन्ति।

शब्दार्थयोर्मञ्जुलसामञ्जस्यमेव साहित्यमिति कथ्यते। भवभूतिसाहित्यमस्मिल्लक्षणे पूर्णरूपेण संगच्छते। महाकविनेदृशस्य शब्दस्य प्रयोगो विहितो येन स्वयमेवाभिमतोऽर्थो निःसरति। शब्दप्रयोगेऽस्य क्षमता दर्शनीया विद्यते।[2]

एवञ्च भवभूतिर्वैदिको व्यावहारिकश्च तस्याभ्यन्तरं यथा विच्छित्तिसम्पन्नं विद्यते, तथैव बाह्यमपि भास्वरतरम्।

• • •

१. एको रसः करुण एव निमित्तभेदा-
भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्तबुद्बुतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम्॥ (उ० रा० च० ३।४७)

२. यदीये वाग्वेणुस्वनमधुमयार्द्रे पथि सदा
ऋषीणामाद्यानां महिममयवाचामनुपदम्।
व्रजन्तो दृश्यन्ते मधुलिह इवार्था गुरुतृपः
समीक्षे पन्थानं तमतिविरलं भूतिकलितम्॥
(भवभूतेः दार्शनिकी दृष्टिः, मङ्गलाचरणम्–३)

# कालिदासस्य युद्धविज्ञानम्

डॉ० वनेश्वरपाठकः, एम्० ए० (डी० लिट्०)

**संस्कृतविभागाध्यक्षः—सेंटजेवियर्स कॉलेज, राँची (बिहार)**

युद्धं प्राणिनां स्वाभाविको धर्मः। 'निर्बलं सबलो हन्ति', 'जीवो जीवति जीवेन' इत्यादयः प्रचलिता उक्तयो युद्धस्य स्वाभाविकधर्मत्वमेवाभिव्यञ्जयन्ति। भगवतो व्यासस्य मतेऽपि युद्धं प्राणिनां यथागतः (सनातनः) धर्मः—

**क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति।**
**श्वा श्वानं हन्ति दाशार्हं पश्य धर्मो यथागतः[१]॥**

वैदिककालादारभ्य पौराणिकं कालं यावद् भारतीयेतिहासस्य महान् भागो युद्धस्यैवेतिहासः। वैदिकसाहित्ये देवासुरसंग्रामः, आदिकाव्ये रामायणे रामरावणयुद्धम्, महाभारते कौरवपाण्डवानां युद्धमिति महत्त्वपूर्णं युद्धत्रयं प्राचीनयुद्धविज्ञानस्योल्लेखनीयं निदर्शनमस्ति।

अस्माकं स्मृतिग्रन्थेषु मनु-याज्ञवल्क्य-विष्णुस्मृत्यादिषु, कामन्दकीये नीतिसारे, शुक्रनीतौ, महाभारते, कौटल्यस्यार्थशास्त्रे, पुराणादिषु च युद्धस्य धर्मत्वेन मान्यताऽस्ति। मानवजातौ वर्गेषु जातिषु वा विभक्तायां युद्धस्य क्षत्रियधर्मरूपेणाथवा राजधर्मरूपेण स्वीकृतिः सञ्जाता। यथाह मनुः—'शस्त्रास्त्रभृत्त्वं क्षत्रस्य[२]', 'क्षत्रियस्य च रक्षणम्[३]', 'क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्[४]' इत्यादि। याज्ञवल्क्योऽप्याह—'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्[५]'। गीताऽपि कथयति—

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्[६]॥**
**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्[७]॥**
**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः[८]॥**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः[९]।**

महाभारतेऽपि लिखितमस्ति—

**नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम्।**
**श्रेयो हि मरणं युद्धे न भीतस्य पलायनम्[१०]॥**

---

१. महाभारतम्, उद्योगपर्व ५९। २. मनुस्मृतिः १०।७९। ३. मनुस्मृतिः १०।८०।
४. मनुस्मृतिः ७।१४४। ५. याज्ञव० १।११९। ६. गीता १८।४३।
७. गीता २।३२। ८. गीता २।३७।
९. गीता ३।३०। १०. महा० विराट्पर्व ४९।

अन्वर्थसंज्ञाधारि महाभारतं तु भारतस्य (युद्धस्य) महान् कोषः। अस्मिन् वर्णिता युद्धप्रकाराः, युद्धसाधनान्यायुधादीनि, सैन्यसंघटनानि चातीव विस्मयकारीणि सन्ति। अद्यतन-वैज्ञानिकाविष्कारैर्यानि प्रलयङ्कराणि युद्धसाधनानि निर्मीयन्ते, तानि प्राचीनभारतीयसाहित्ये ततोऽपि चमत्कारपूर्णैः प्रभावैः सह वर्णितानि सन्ति। महाकविकालिदासस्य ग्रन्थेषु प्राचीन-भारतीयसाहित्ये वर्णितस्य युद्धविज्ञानस्योपयोगः सामञ्जस्येन दृश्यते।

कालिदासस्य समये जैनधर्मस्य बौद्धधर्मस्य च प्रबलैः प्रहारैर्वर्णाश्रमधर्मः सङ्कटापन्न आसीत्। अहिंसातत्त्वस्य प्रचारेण यागादिकर्मकाण्डेषु जनानामास्थायां शैथिल्यमापतितमासीत्। अतो वर्णाश्रमधर्माणां पुनः सुव्यवस्थापनाय क्षात्रधर्मस्याथवा राजधर्मस्य पुनर्जागरणमपेक्षित-मभवत्। प्रजानां परिपालनाय, वर्णाश्रमधर्मस्य व्यवस्थापनाय, सामाजिकव्यवस्थायै सतां रक्षणाय, दुष्टानां दमनाय च राजधर्मस्य महत्त्वपूर्णमङ्गं युद्धमावश्यकमिति कालिदासस्याप्य-भिमतम्। अत एव तस्य ग्रन्थेषु युद्धस्य वर्णनं विस्तरतो दृष्टिमायाति।

महाकविः कालिदासो ज्यौतिषायुर्वेदादिविज्ञानानामिव युद्धविज्ञानस्यापि सूक्ष्मं गम्भी-रञ्चानुशीलनं कृतवानासीदिति तस्य ग्रन्थेषु वर्णितानां युद्धप्रकाराणां युद्धोपस्करणादीनाञ्चा-वलोकनेन सम्यक् स्पष्टतामेति। निम्नलिखितैर्दृष्टिकोणैस्तस्य युद्धविज्ञानं समीक्षितुं शक्यते—

**(१) युद्धस्य स्वरूपम्**—सामान्यतो युद्धस्य रूपद्वयम्—आक्रमणात्मकं संरक्षणात्मकञ्च। द्वयमप्येतत् स्वार्थं परार्थञ्च। आत्मनो लाभाय स्वयं कृतं युद्धं स्वार्थम्। मित्रस्य साहाय्याय कृतं युद्धं परार्थम्। यथाह मनुः—

**स्वयंकृतश्च कार्यार्थमकाले काल एव वा।**
**मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः[1]॥**

वस्तुलिप्सा-दुष्टदमन-शक्तिप्रदर्शन-स्वधर्मप्रचार-शान्तिस्थापना-स्वाधिकारविस्तारादीन्या-क्रमणात्मकयुद्धस्योद्देश्यानि सन्ति। आत्मरक्षा संरक्षणात्मकयुद्धस्योद्देश्यमस्ति। कालिदासस्य कुमारसम्भवे तारकासुरेण पराजितानामिन्द्रादीनां साहाय्याय कुमारेणासुरैः सह कृतं युद्धं परार्थमाक्रमणात्मकं युद्धमस्ति। अभिज्ञानशाकुन्तले दुर्जयनामदानवगणस्य वधाय देवराजेनेन्द्रे-णाभ्यर्थितस्य दुष्यन्तस्येन्द्रसारथिना मातलिना सह युद्धाय स्वर्लोकं प्रति प्रस्थानं परार्थमाक्रम-णात्मकं युद्धम्। रघुवंशे पितुरश्वमेधीयाश्वस्य रक्षार्थं इन्द्रेण सह स्वार्थमाक्रमणात्मकं युद्धम्। शक्तिप्रदर्शनमप्यश्वमेधयज्ञस्य महत्त्वपूर्णमुद्देश्यमस्ति।

रघोर्दिग्विजये कृतस्य स्वार्थस्याक्रमणात्मकयुद्धस्योद्देश्यमधिकारविस्तारोऽस्ति। स्वय-म्वरात् प्रत्यावृत्तस्याजस्य प्रतिरोधिभिः शत्रुभिः सह वस्तुलिप्सात्मकं स्वार्थं रक्षणात्मकमाक्रमणात्म-कञ्च युद्धमस्ति। रामस्य रावणादिभिः सह वस्तुलिप्सात्मकं स्वार्थं मुनीनां त्राणार्थं परार्थञ्चा-क्रमणात्मकं युद्धमस्ति। लवणासुरेण सह शत्रुघ्नस्य युद्धं यमुनातटवासिनां रक्षणार्थं परार्थ-माक्रमणात्मकं युद्धमस्ति।

---

१. मनु० ७।१९४।

(ः) युद्धस्य प्रकाराः—प्राचीनसाहित्येषु युद्धस्याष्टौ प्रकारा वर्णिताः सन्ति—रथयुद्धम्, पदातियुद्धम्, हस्तियुद्धम्, अश्वयुद्धम्, मल्लयुद्धम्, गदायुद्धम्, मायायुद्धम्, नौयुद्धञ्च। एषु युद्धेषु पदातियुद्धं सर्वोत्कृष्टो युद्धप्रकारोऽस्ति। पदातिबहुला सेनैव शक्तिशालिनी सेना। सा सर्वेषु स्थलेषु युद्धे समर्था—

**पदातिबहुला सेना दृढा भवति भारत।**
**बहुदुर्गा महाकक्षा वेणुवेत्रसमाकुला॥**
**पदातीनां क्षमा भूमिः पर्वतोपवनानि च।** (महा० शा० प०)

अत एवाद्यापि पदातिसेनापतिरेव प्रधानसेनापतिः कथ्यते।

कालिदासस्य ग्रन्थेषूपर्युक्तानामष्टप्रकाराणां युद्धानां वर्णनं दृश्यते, तद् यथा (कुमारसम्भवे)—

**पत्तिः पत्तिमभीयाय रणाय रथिनं रथी।**
**तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः[1]॥**

अस्मिन् समानयुद्धवर्णने पदाति-रथ-तुरङ्ग-हस्तियुद्धप्रकारा दृश्यन्ते। तत्रैव—

**मायामयं समरमाशु महासुरेन्द्रो मायाप्रचारचतुरो रचयाञ्चकार[2]।**

इति मायायुद्धमपि वर्णितमास्ते। रघुवंशे सप्तविधयुद्धस्य वर्णनं विद्यते। तद् यथा—

**पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम्।**
**यन्ता गजस्याभ्यपतद् गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम्[3]॥**

गदायुद्धस्य मल्लयुद्धस्य च वर्णनं यथा—

**अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित्।**
**व्यश्वौ गदाव्यायतसम्प्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ[4]॥**

मल्लयुद्धस्याथवा द्वन्द्वयुद्धस्य केशाकेशि-हस्ताहस्तीत्यादयोऽन्येऽपि केचन प्रकाराः सन्ति। कालिदासेनास्यापि प्रकारविशेषस्योल्लेखः कृतः—

**शस्त्र्या युयुधतुः कौचित् केशाकेशि भुजाभुजि[5]।**

नौयुद्धम्—रामायणे नौसेनाया उल्लेखोऽस्ति। शृङ्गवेरपुरस्थो निषादराजो भरतस्याक्षौहिणीसेनामवलोक्य[6] स्वकीयान् नौसैनिकान् युद्धाय प्रस्तुतीभवितुमादिदेश—

---

१. कुमार० १६।२। २. कुमार० १६।२४।
३. रघु० ७।३७। ४. रघु० ७।५२।
५. कुमार० १६।४५।
६. अक्षौहिणी—रथाः २१८७० + अश्वाः ६५६१० + गजाः २१८७० + पदातयः १०९३५० = २१८७००।

नावां शतानां पञ्चानां कैवर्तानां शतं शतम् ।
सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ (वा०रा०,अयो० ८३।८)

निषादराजस्य पार्श्वे पञ्चाशत् सहस्त्राणि (५००००) नौसैनिका आसन् । एतेन प्रतीयते यत् तदानीं नौयुद्धं सुव्यवस्थितमासीत् । कालिदासेनापि नौशक्तेरुल्लेखः कृतः—

"वङ्गानुत्खाय तरसा नेता नौसाधनोद्यताम्"···इत्यादि । (रघु० ४।३५)

(३) युद्धधर्मः—युद्धस्य मुख्यमुद्देश्यमस्ति शक्तीनां प्रयोगः । किन्तु परिस्थितिविशेषे क्रूरतायाः परिहारोऽप्यावश्यकः । अत एव युद्धधर्मस्य सम्बन्धे विशेषनियमा निर्धारिताः सन्ति । यथा—

(क) समानयुद्धम्—गजारूढो गजारूढेन, रथी रथिना, अश्वारूढोऽश्वारूढेन, पदातिः पदातिना युध्येत इति युद्धस्य सामान्यो नियमः । यथाह व्यासः—

गजो गजेन समरे रथिनं च रथी ययौ ।
अश्वोऽश्वं समभिप्रायात् पदातिश्च पदातिनम्[1] ॥

कालिदासेऽपि नियमस्यास्य परिपालनं दृश्यते—

पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद् गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम्[2] ॥

पत्तिः पत्तिमभीयाय रणाय रथिनं रथी ।
तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः[3] ॥

(ख) युद्धेऽप्रहार्योऽवध्यश्च, यथाह मनुः[4]—

न हन्यात् स्थलमारूढं न क्लीबं न कृताञ्जलिम् ।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥
नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥

याज्ञवल्क्योऽप्याह[5]—

तवाहं वादिनं क्लीबं निर्हेतिं परसङ्गतम् ।
न हन्याद् विनिवृत्तं च युद्धप्रेक्षणकादिकम् ॥

कालिदासेऽप्यस्य युद्धधर्मस्य पालनं दृश्यते—

न रथी रथिनं भूयः प्राहरेच्छस्त्रमूर्च्छितम्[6] ।

---

१. महा० भी० प० ४५ । २. रघु० ७।३७ । ३. कुमार० १६।१२ ।
४. मनु० ७।९१–९३ । ५. याज्ञव० १।३२६ । ६. कुमार० १६।४७ ।

पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष[1] ॥

(ग) **युद्धादपलायनम्**—युद्धक्षेत्रादपलायनम्, युद्धक्षेत्रे मरणञ्च वीरत्वस्य महानुत्कर्षः। यथाह व्यासः[2]—

नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयो हि मरणं युद्धे न भीतस्य पलायनम् ॥

क्षात्रं कर्मोपवर्णयन्ती गीताऽप्याह—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्[3] ।

मनुरप्याह—

संग्रामेष्वनिवर्त्तित्वं प्रजानां चैव पालनम्
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः[4] ।

याज्ञवल्क्योऽप्याह—

य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥
राजा सुकृतमादत्ते हतानां विपलायिनाम्[5] ।

कालिदासोऽप्यस्य धर्मस्य समर्थकः । कुमारसम्भवेऽप्रतिमवीरः कुमारस्तारकासुरेण—

रे शम्भुतापसशिशो वत मुञ्च मुञ्च दोर्दर्पमत्र विरम त्रिदिवेन्द्रकार्यात् ।
संग्रामतोऽपसर जीव पितुर्जनन्यास्तूर्णं प्रविश्य वरमङ्कतलं विधेहि[6] ॥

इत्यादिवाक्यैः प्रधर्षितोऽपि समरभूमिं न विजहौ । रघुवंशे इन्द्रेण—

अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः[7] ।

इति वचनेन तर्जितोऽपि रघुर्युद्धान्न परावर्त्तत । सिंहं प्रति राज्ञो दिलीपस्य—

क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः[8] ।

इत्युक्तिरपि युद्धादपलायनमेवाभिव्यनक्ति ।

(घ) **युद्धे मरणं श्रेयः**— युद्धे वीरगतिं प्राप्ताः सैनिकाः सुरलोकेऽभिनन्दिताः, सुरसुन्दरीभिः स्वागतीकृताः, अप्सरोभिः सत्कृताश्चेति प्राचीनेषु ग्रन्थेषु वर्णितमस्ति । मनुरप्याह—

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः[9] ॥

---

१. रघु० ४।४७ । २. महा० विराट्पर्व ४९ ।
३. गीता १८।४३ । ४. मनु० ७।८८, ८९ । ५. याज्ञव० १।३२४, ३२५ ।
६. कुमार० १७।१३-१४ । ७. रघु० ३।५० । ८. रघु० २।५३ ।
९. मनु० ७।८९ ।

याज्ञवल्क्योऽप्याह—

य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा[1] ॥

शुक्रनीतिरपि कथयति—

द्वावेव सूर्यलोकाधिकारिणौ योगी युद्धे वीरगतिं प्राप्तो योद्धा च[2] ।

महाभारतमपि भाषते—"श्रेयो हि मरणं युद्धे[3] ।"

गीताऽपि गायति—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्[4] । इत्यादि ।

कालिदासोऽपि विश्वसिति सम्मुखयुद्धे मृतानां स्वर्गप्राप्तिर्देवाङ्गनाभिः सहवासश्चेति—

कश्चिद् द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श[5] ॥

देवाङ्गनाभिरादातुं रक्ताभिर्हृतमोषिरे[6] ।

एकामप्सरसं प्राप्तुं वीरद्वयस्य युद्धम्, यथा कुमारसम्भवे—

एकामप्सरसं प्राप्तुं युयुधाते वरायुधौ[7] ।

रघुवंशेऽपि—

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः[8] ॥

अग्निपुराणे तु वीरगतिं प्राप्तमेकमेव राजानं प्राप्तुमप्सरःसहस्राणां विवादो दृश्यते—

वराप्सरःसहस्राणि भूपमायोधने हतम् ।
त्वरितान्युपधावन्ति मम भर्ताऽयमेति च[9] ॥

(ङ) युद्धादन्यत्र गजवधो निषिद्धः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं श्रीर्मे करिणः" इति चाक्षुपः । युद्धधर्ममिमं द्योतयितुमेव कालिदासः—

तमापतन्तं नृपतेरवध्यो वन्यः करोति श्रुतवान् कुमारः ।
निवर्त्तयिष्यन् विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः[10] ॥

---

१. याज्ञव० १।३२४ ।    २. शुक्र० ४।३१७-३१८ ।
३. महा० विराट्पर्व ४९ ।    ४. गीता २।३२, ३७ ।    ५. रघु० ७।५१ ।
६. कुमार० १६।३६ ।    ७. कुमार० १६।१८ ।    ८. रघु० ७।५३ ।
९. रघु० ७।५१ मल्लिनाथटीका ।    १०. रघु० ५।५० तत्रत्यमल्लिनाथटीका ।

इत्यत्र वन्यः करीति प्रोक्तवान् । एवमेव दशरथस्तमसानद्या जलभरणे निरतस्य मुनिकुमारस्य घटध्वनिं गजध्वनिं मत्वा तस्मिन् शब्दवेधिवाणं विससर्जेति निषिद्धमेव कर्मं कृतवान् **'नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत्[१]'** इत्युक्तवता कालिदासेन स्वकीयमुपर्युक्तयुद्धधर्मज्ञत्वमेव सूचितम् ।

**(४) कूटयुद्धम्**—यद्यपि मनुर्याज्ञवल्क्यश्च युद्धे कूटनीतिप्रयोगं हेयं मन्येते[२] । शुक्राचार्योऽपि धर्मयुद्धस्य समर्थकः[३] । तथापि कूटनीतेः परमप्रशंसकस्य शुक्राचार्यस्य मते युद्धे न्यायान्यायविचारो व्यर्थः । प्रबलशत्रोर्विनाशाय कूटयुद्धमावश्यकम् । इन्द्र-राम-कृष्णैस्तथाऽन्यैर्देवैरपि कूटनीत्यैव विजयश्रीर्लब्धा । युद्धे शत्रोर्ध्वंस एव परमं लक्ष्यम् । अतस्तत्सिद्धये युद्धं न्यायसङ्गतमेव स्यादिति नावश्यकम् । असावधाने शत्रौ दूराद् दस्योरिवाभिपतनं नानुचितम्[४] । कामन्दकीये नीतिसारेऽपि शुक्रस्य कूटनीतेः समर्थनं दृश्यते । कौटल्योऽपि कूटयुद्धस्य पक्षधर आसीत् । कालिदासोऽपि कूटयुद्धस्य पक्षपाती प्रतीयते । शस्त्ररहितस्यात एव निर्बलस्य शत्रोरुपरिप्रहारः सुलभविजयो भवतीति तस्याप्यभिमतम्—

**अपशूलं समासाद्य लवणं लक्ष्मणानुजः ।**
**रुरोध सम्मुखीनो हि जयो रन्ध्रप्रहारिणाम्[५] ॥**

**कूटयुद्धविधिज्ञेऽपि तस्मिन् सन्मार्गयोधिनि[६] ।**

इत्युक्तिरपि कालिदासस्य कूटयुद्धविधिज्ञतामभिव्यनक्ति ।

**(५) दुर्बलशत्रोः कर्म**—**'बलीयसाऽभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसधर्ममातिष्ठेत्'** इति कौटल्यः । रघुवंशे सुह्मदेशीयैर्दुर्बलैः शत्रुभी रघोः सम्मुखं वैतसीं वृत्तिम् (प्रणतिम्) आश्रित्य आत्मा रक्षितः—

**आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम्[७] ।**

शिरस्त्राणमपनीय शरणागतिरपि दुर्बलस्य शत्रोः कर्म—

**अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः[८] ।**

अधुनापि पराजितेन शत्रुणा एतत् कर्म विधीयते ।

**(६) युद्धयात्रासमयः**—प्राचीनकाले मार्गशीर्ष-फाल्गुन-चैत्रेति मासत्रयं युद्धयात्रार्थमत्युपयुक्तं मन्यते स्म । नातिशीता नात्युष्णा वर्षाभीतिरहिताश्चेमे मासा युद्धयात्रानुकूला भवन्ति । एषु मासेषु गजश्वादीनां कृते पर्याप्तखाद्यसामग्री सुलभा भवति । मनुरप्याह—

**मार्गशीर्षे शुभे मासि यायाद् यात्रां महीपतिः ।**
**फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम्[९] ॥**

---

१. रघु० ९।७४ । २. मनुः ७।९०–९३; याज्ञव० १।३२२–३२३ ।
३. शुक्रनीतिः ४।३१७–३१८ । ४. शुक्रनीतिः, अध्यायः ७ ।
५. रघु० १५।१६ । ६. रघु० १७।६९ । ७. रघु० ४।३५ तत्र मल्लिनाथटीका ।
८. रघु० ४।६४ । ९. मनु० ७।१८२ ।

आत्मनो निश्चितं विजयं सम्भाव्य, शत्रुं विपन्नं चावलोक्यान्येष्वपि कालेषु युद्धयात्रा कर्तुं शक्यते—

**अन्येष्वपि कालेषु यदा पश्येद् ध्रुवं जयम् ।**
**तदा यायाद् विगृह्यैव व्यसने चोत्थिते रिपोः[1] ॥**

कालिदासः शरदृतुमेव युद्धयात्रायामनुकूलं मन्यते—

**सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।**
**यात्रायै चोदयामास तं शक्तेः प्रथमं शरत्[2] ॥**

(रामोऽपि शरदृतौ विजयदशम्यां युद्धाय रावणं प्रति प्रतिष्ठतेति प्रसिद्धिः ।) प्रदोषकालो यात्राया अनुकूलो भवति, प्रदोषे यानाधिरोहणविधानात् । अतो रघुः प्रदोषकाले रथमारुह्य प्रतस्थे—'**अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम्[3]**' ।

**(७) यात्रायां मङ्गलाचरणम्**—प्रस्थानकाले मङ्गलाचरणं शुभावहं भवतीति सर्वमान्यः सिद्धान्तः ।

रघुवंशे रघोर्दिग्विजयारम्भे नीराजनाख्यं शान्तिकर्मानुष्ठीयते—

**तस्मै सम्यग्धुतो वह्निर्वाजिनीराजनाविधौ ।**
**प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥** (रघु० ४।२५)

वयोवृद्धाः पौरयोषितो मङ्गलाय लाजानवकिरन्ति—

**अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः[4] ।**

विजयश्रीप्राप्तये सर्वौषधिस्नानं क्रियत इति कालिदासस्यानयोक्त्या प्रतीयते—

**सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम्[5] ।**

तथा च '**शुद्धपार्ष्णिरयान्वितः**' (रघु० ४।२६) इत्यत्र '**अयान्वितः**' अर्थात् शुभावहं विधिं सम्पाद्य ('**अयः शुभावहो विधिः**' इत्यमरः १।४।२७) इति ब्रुवता कालिदासेन युद्धयात्रायां मङ्गलाचरणमावश्यकमिति प्रतिपादितम् ।

**(८) यात्रायां शकुनविचार.**—सामान्ययात्रायामिव युद्धयात्रायामपि शुभाशुभशकुनविचारो भारतीयवाङ्मये विस्तरतो दृष्टिमेति । रामायणस्यारण्यकाण्डे (२३, २५ सर्गयोः) तथा विष्णुधर्मोत्तरपुराणे शुभाशुभनिमित्तानां वर्णनं विशेषतो दृश्यते ।

---

१. मनु० ७।१८३ । २. रघु० ४।२४ ।
३. रघु० ५।२८ तत्र मल्लिनाथटीका । ४. रघु० ४।२७ ।
५. रघु० ४।४१ 'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्' इति यादवः । तत्रैव मल्लिनाथटीका ।

कालिदासस्य ग्रन्थेष्वपि शुभाशुभशकुनानां विचारो दृश्यते। तस्य नाटकेषु निमित्तानां संसूचनमनेकत्र निर्दिष्टमास्ते। मेघस्य यात्रायामपि स निमित्तानां प्राकृतिकीमनुकूलतां वर्णयति—

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः[1]** । इत्यादि।

युद्धयात्रायां तु तेन कुमारसम्भवे रघुवंशे च शुभाशुभनिमित्तानामतीव विस्तरतो वर्णनं कृतमास्ते। यात्रायां विशेषत आक्रमणकाले शुक्रस्य सम्मुखदर्शनमशुभतया निषिद्धम्। एतदभिज्ञः कालिदासस्य कामदेवः शिवस्याश्रमं प्रविविक्षुः शुक्रस्येव नन्दिकेश्वरस्य सम्मुखदर्शनं परिहरति—

**दृष्टिप्रपातं परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे[2]** ।

कुमारसम्भवस्य पञ्चदशसर्गे (१३ श्लोकतः ३२ श्लोकं यावत्) कुमारेण सह सम्परायाय प्रस्थितस्य तारकासुरस्याशुभनिमित्तानि विस्तरतो वर्णितानि सन्ति। उपरि निर्दिष्टा प्रायः सर्व एवाशुभसूचकाः प्राकृता उपद्रवास्तत्र वर्णिता दृश्यन्ते।

आहवयात्रायामश्वादीनां नीराजनाविधौ हुतादग्नेर्दक्षिणाभिमुखज्वालानिःसरणं विजयसूचकम्—

**तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ।**
**प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ[3]** ॥

(**'इद्धो प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति'** इति तत्रैव **मल्लिनाथः**) गृध्रपक्षपवनेन पताकायाः प्रकम्पनम्, पताकोपरि गृध्रस्योपवेशनं वा दुर्निमित्तसूचकम्—

**आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे।**

इति शकुनार्णवः।

**रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितं ध्वजम्[4]** ।

युद्धयात्रायां पताकानां वृक्षाणाञ्च प्रतिकूलेन प्रभञ्जनेन भञ्जनमशुभं सूचयति—

**तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः[5]** ।

सूर्यस्य भयङ्करपरिवेषोऽप्यशुभाय कल्पते—

**लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेषमण्डलः[6]** ।

दिशां धूसरवर्णता, सान्ध्यमेघरक्तता, शृगालीनां भयङ्करं रुतञ्चाशुभसूचकम्—

**श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः[7]** ।

---

१. मेघ० पूर्व०। २. कुमार० ३।४३। ३. रघु० ४।२५।
४. रघु० ११।२७। ५. ११।५२।
६. रघु० ११।५९। ७. रघु० ११।६०–६१।

इत्यादि संक्षेपतः कालिदासस्य ग्रन्थेषु युद्धयात्रायां कृतः शकुनविचारस्तस्य शकुनविज्ञानभिज्ञतामभिव्यनक्ति ।

(९) **युद्धयात्रायाः पूर्वं सुरक्षाया व्यवस्था**—विजयाभिलाषी राजा युद्धाय प्रस्थानात् पूर्वं स्वनिवासस्थानस्य, प्रान्तदुर्गस्य, पार्ष्णिसेनायाश्च व्यवस्थां कृत्वा, अर्थाद् रक्षितपृष्ठदेशः सन् विजयाय प्रतिष्ठते । यथाह मनुः—

**कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।**
**उपगृह्यास्पदं चैव चारान् सम्यग् विधाय च ॥**

अर्थात् स्वीयदुर्गराष्ट्ररूपे मूले प्रधानपुरुषाधिष्ठितं रक्षार्थं सैन्यैकदेशस्थानरूपं प्रतिविधानं कृत्वा हस्त्यश्वरथपदातिसेनाकर्मकरात्मकं षड्विधं बलमादाय रिपुपुरमभियायात् ।

**संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।**
**सांपरायिककल्पेन यायादरिपुरं शनैः ॥[1]**

पुनः स प्राह—

**पार्ष्णिग्राहं च संप्रेक्ष्य तथाक्रन्दं च मण्डले ।**
**मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥[2]**

अर्थात् पृष्ठवर्त्तिनं शत्रुनृपतिं (पार्ष्णिग्राहम्) तथाऽनन्तरवर्तिशत्रुनृपतिम् (आक्रन्दम्) सम्यगवलोक्य (तयोः संशोधनं कृत्वा) विजयाय प्रतिष्ठेत । रघुरपि—

**स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।**
**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥[3]**

अर्थाद् रघुः स्वनिवासस्थानस्य प्रान्तदुर्गस्य च व्यवस्थां कृत्वा उद्धृतपृष्ठशत्रुरथवा सेनया रक्षितपृष्ठदेशः सन् विधिवन्मङ्गलाचारं सम्पाद्य षड्विधं[4] सैन्यमादाय दिग्विजयाय प्रतस्थे ।

**(१०) युद्धस्योपकरणानि**

(क) **वाहनम्**—हस्त्यश्वरथपदातीति चत्वारि सेनाङ्गानि । मनोर्वचनानुसारं युद्धे समतलभूमौ रथा अश्वाश्च विशेषोपयोगिनः, जले नावो हस्तिनश्चोपयोगिनो भवन्ति—

**स्यन्दनाश्वैः समे युद्ध्येदनूपे नौद्विपैस्तथा ।[5]**

मेधातिथिरप्याह—

**अल्पोदके हस्तिभिरगाधोदके च नौभिः ।**

---

१. मनु० ७।१८४–१८५ ।  २. मनु० ७।२०७ ।  ३. रघु० ४।२६ ।
४. 'मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति कोशः । (रघु० ४।२६ मल्लिनाथटीका) ।
५. मनु० ७।१९२ ।

एतेनेदं स्पष्टतां व्रजति यत् प्राचीनकाले युद्धे हस्तिनः, अश्वा रथाः, नावश्च वाहनान्यासन्। एतेषु वाहनेषु रथस्य प्रामुख्यमासीत्। वैदिकसाहित्येऽपि रथयुद्धस्य वर्णनमस्ति। "यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः।"[1] ऐरातवाहन इन्द्रोऽश्वानां रथानाञ्च प्राचुर्येण सम्पन्न आसीदित्यनया ऋचा प्रतीयते। युद्धे रथारूढाः शत्रवो मियाणि च रक्षार्थं तमाह्वयन्ति स्म—

**समानं चिद्रथमातस्थिवांसा नानाहवेते स जनास इन्द्रः।**[2]

शुक्लयजुर्वेदे **'आ ब्रह्मन्'** इति योगक्षेमसूक्ते रथेष्ठानाम् (रथिनाम्) जिष्णुताया अभिकामना विद्यते—**'जिष्णू रथेष्ठाः'** (उत्तरोऽध्यायः २२।२२)।

महाभारते पुराणेषु च रथस्य प्रमुखयुद्धवाहनत्वेन वर्णनं दृश्यते। कालिदासस्य कुमारसम्भवे कुमारो विजित्वरनामानं रथमारुह्य युद्धाय प्रतस्थे—

**विजित्वरं नाम तदा महारथं धनुर्धरः शक्तिधरोऽध्यरोहयत्।**[3]

रघुवंशे रावणेन सह युध्यमानो राम इन्द्रेण प्रेषितं जैत्रं रथमारुरोह—

**देवसूतभुजालम्बी जैत्रमध्यास्त राघवः।**[4]

कालिदासस्यान्येष्वपि ग्रन्थेषु रथस्य युद्धवाहनत्वेन प्रचुर उपयोगो दृश्यते। युद्धे अल्पोदके गजानाम्, अगाधोदके च नावां विशेषत उपयोगिता वर्त्तते। यथाह मेधातिथिः—

**अल्पोदके च हस्तिभिरगाधोदके च नौभिः।**

रघुवंशे कालिदासेनेयमुपयोगिता वर्णिताऽस्ति—

**स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।**[5]

स नौभिः साधनैर्युद्धाय समुद्यतान् वङ्गान् उन्मूलितवान्—

**वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान्।**[6]

वेदेऽपि नौसाधनस्योपयोगिता वर्णिताऽस्ति—

**आ नो नावा मतिनां यानं पाराय गन्तवे।** (ऋग्० १।४६।७)

प्राचीनकाले विमानस्यापि वर्णनं दृग्विषयतामेति; किन्तु युद्धे तस्योपयोगोऽधुनावत् तदानीं न दृश्यते। केवलं युद्धे वीरगतिं प्राप्ता विमानमारुह्य स्वर्गं गच्छन्ति स्म, विमानचारिणो देवा गगनपथादधस्ताज्जायमानं युद्धादिकं दृश्यमवलोकयन्ति स्म, विजये जयघोषं कुर्वन्ति स्म, विपक्षैरुपद्रुताः सन्तः पलायन्ते स्म इत्यादिरूपाणि वर्णनानि पुराणादिषु प्राप्यन्ते। कालिदासेनापीदृशं वर्णनं कृतम्—

**उच्चैर्वैमानिका व्योम्नि कीर्णे दूरमपासरन्।**[7]

---

१. ऋग्०, २।१२ इन्द्रसूक्तम्। २. ऋग्० २।१२ इन्द्रसूक्तम्।
३. कुमार० १४।२। ४. रघु० १२।८५। ५. रघु० ४।३८।
६. रघु० ४।३५। ७. कुमार० १६।११।

रामायणे पुष्पकविमानस्य, पुराणेषु गारुडविमान-हंसविमानादीनां वर्णनं विद्यते। रघुवंशेऽपि पुष्पकविमानस्य वर्णनं कृतं कालिदासेन; किन्तु कुत्रापि विमानस्य युद्धवाहनत्वेन चर्चा नास्ति।

(ख) आयुधानि—आयुधानां त्रयो भेदाः सन्ति—प्रहरणानि, पाणिमुक्तानि, यन्त्रमुक्तानि च। तत्र प्रहरणानि खड्गादीनि, पाणिमुक्तानि चक्रादीनि, यन्त्रमुक्तानि शरादीनि। सामान्यत आयुधानां भेदद्वयम्—अस्त्रं शस्त्रञ्च[1]। तत्र क्षेपणयोग्यानि वाणादीन्यस्त्राणि। प्रहरणयोग्यानि खड्गादीनि शस्त्राणि।

वेदेषु, रामायणे, महाभारते, पुराणेषु चायुधानां विविधाः प्रकाराः प्रयोगाश्च वर्णिताः सन्ति। ऋग्वेदस्य षष्ठे सप्तमे च मण्डले आयुधानां विस्तृतं वर्णनं दृश्यते; परन्तु वेदेषु वर्णितेष्वायुधेषु धनुर्बाणस्येन्द्रस्य वज्रस्य चैव मुख्यता दृश्यते—

**धन्वना गा धन्वानि जयेम धन्वना तीव्राः समदो जयेम।**
**धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशा जयेम॥[2]**

वयं धनुषा शत्रोर्गाः, युद्धम्, मदोन्मन्ताः सेनाश्च जयेम। वयं धनुषा शत्रोः कामान् नाशयेम। वयं धनुषा सर्वा दिशो जयेम।

वाल्मीकिरामायणस्य बालकाण्डे एकविंशे सर्गे अस्त्रशस्त्राणां निर्माणस्येतिहासस्य तेषां प्रयोगविधेश्च विस्तृतं वर्णनं दृश्यते। रामामणे दण्डादिचक्राणाम्, गदा-पाशाशनि-शक्ति-वैद्याधर-गान्धर्व-पैशाच-मानव-शैवाद्यस्त्राणाम्[3], वारुण-रौद्रपाशुपतैन्द्रैपीक-मोहन-स्वापन-जृम्भण-सन्ताप-विलापनादिदिव्यास्त्राणाम्[4], शब्दवेधिवाणस्य[5], खड्ग-शूल-मुद्गर-मुसल-तोमरादीनाम्[6], शक्तेः[7], पैतामहास्त्रस्य[8], श्वमुख-कुक्कुटमुख-मकरमुख-खरमुख-वराहमुखाशीविषमुखादिविध्वंसकास्त्राणां[9] वर्णनमस्ति।

महाभारते पाशुपतास्त्रस्य (वनपर्वणि १७५।५०,६४), आग्नेय-वारुण-ब्राह्म-पारमेष्ठ्ययाम्य-कौवेरनाममहास्त्राणाम् (वनपर्वणि १६५-१६९), ऐन्द्रास्त्रसम्मोहनास्त्रयोः (विराटपर्वणि ६५),

---

१. अस्यते क्षिप्यते इत्यस्त्रम् (असु क्षेपणे + ष्ट्रन्)। शस्यते हिन्स्यत इति शस्त्रम् (शसु हिंसायाम् + ष्ट्रन्)।
२. ऋग्० ६।७५।२।
३. विश्वामित्र एतान्यस्त्राणि रामलक्ष्मणौ शिक्षयामास।मानवास्त्रस्य प्रयोगं रामो मारीचोपरि कृतवान्। (रामा० बाल० सर्गः–३४)।
४. रामा०, बाल० स० ५६। ५. रामा०, अयो०, स० ६३।
६. रामा०, सुन्दर० स० ५,६।
७. रामा०, लङ्का० स० १०१। मेघनादेन लक्ष्मणोपरि प्रयुक्ता।
८. रामा०, लङ्का० स० १०१ पैतामहास्त्रं रावणस्य वधाय अगस्त्येन निर्मितम्, तेन तद् रामाय प्रदत्तम्, रामेण रावणस्य वधाय तत् प्रयुक्तम्।
९. रामा०, लङ्का० स० १००।

प्रस्वापमहास्त्रस्य (उद्योगप० १८५), शक्त्याः (द्रोणप० १८६), वैष्णवास्त्रस्य (द्रोणप० २९), नारायणास्त्रस्य (द्रोणप० २०२), सुदर्शनचक्रस्य (सौप्तिकप० १२) च परिचयः प्राप्यते। महाभारतस्योद्योगपर्वणि (१५५ अध्याये) आशीविषधरप्रभृतिसंहारकयन्त्राणाञ्च वर्णनं दृश्यते।

विष्णुपुराणे विष्णोः स्वरूपवर्णने ('शंखचक्रगदापाणिः' इत्यादि), देवीभागवते (१९ अध्याये) तथा मार्कण्डेयपुराणे (द्वितीयेऽध्याये) देव्याः स्वरूपवर्णने च विविधास्त्रशस्त्राणां समुल्लेखो विद्यते।

महाकविकालिदासस्य एतेषामस्त्रशस्त्राणां सम्यक् परिचय आसीदिति तस्य ग्रन्थेषु वर्णितानामायुधानामवलोकनेन प्रतीयते। कुमारसम्भवे तारकासुरेण सह युद्धस्योपक्रमे कालिदासः 'यस्य देवस्य यद्रूपं यथा संवहनायुधम्' तथैव वर्णनं तस्य कृतवानस्ति, कुमारसम्भवे तेन वर्णितान्यन्यान्यायुधानि, यथा—अग्निमुखो बाणः (१६।११), अर्द्धचन्द्रबाणः (१६।२८, ४९), नागपाशबाणः (१७।६), जैत्रशरः (१७।१९), धनुर्बाणः (कामस्य, कुमारस्य तारकस्य च), सम्मोहनबाणः (३।६६), शक्तिः (१३।१६), शस्त्री (क्षुरा १६।४२), करवालः (१७।४८), भल्लः (१६।१६), चक्रम् (१६।१७), वायव्यास्त्रम् (१७।२५), अग्निबाणः (१७।३४), वारुणास्त्रम् (१७।४०)।

रघुवंशे वर्णितान्यायुधानि—धनुर्बाणः (सर्वेषां वीराणाम्), वज्रम् (इन्द्रस्य, तृतीये सर्गे), नाराचनामबाणः[1] (४।४१), भल्लनामबाणः[2] (४।६३), नाराचः, भिन्दिपालः[3], प्रस्तरखण्डम् (४।७७), भल्लः (७।५८), प्रस्वापनमस्त्रम् (७।६१), सम्मोहनम् (५।५७), शूलम् (१५।५), ऐन्द्रास्त्रम् (१५।२२), शब्दवेधी बाणः (९।७३), वायव्यास्त्रम् (११।२८), क्षुरप्रबाणः[4] (११।२९), इषीकास्त्रम्[5] (१२।२२), शक्तिः (१२।७७), शतघ्नी (१२।९५), अर्द्धचन्द्रमुखबाणः (१२।९६), ब्रह्मास्त्रम् (१२।९७), वैष्णवास्त्रम् (१५।२४), गारुडास्त्रम् (१६।७७), वृक्षः (१५।१९), उपलः (१५।२१), वृक्षः, शिला, नखम्, शैलाः (१२।७२-७३), परशुः (११।७८), नागास्त्रम् (१२।७६) इत्यादि।

**विक्रमोर्वशीये**—वायव्यास्त्रम् (१।१७), अर्धनाराचः (५।८ तः परम्)।

**अभिज्ञानशाकुन्तले**—शब्दवेधी बाणः (६।३४)।

कालिदासेन रामायणे, महाभारते, देवीभागवते, मार्कण्डेयपुराणे च वर्णितान्येवायुधानि स्वग्रन्थेषु गृहीतानि सन्ति।

अधुनापि प्रवृत्तिरियं धनुर्बाणधारिष्वादिवासिजनेषु दृश्यते। कालिदासेनापि पक्षैरलंकृतो बाणो वर्णितः। यथा—'**नखप्रभाभूषितकङ्कपत्रे**[6]' (रघु० २।३१), '**जहार चान्येन मयूरपत्रिणा शरेण**' (रघु० ३।५६)।

---

१. 'सर्वलौहास्तु ये बाणा नाराचास्ते प्रकीर्त्तिताः' (हलायुधः)।
२. 'स्नुहीदलफलो भल्लः' इति यादवः, (तत्र मल्लिनाथः)।
३. 'क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः' इति यादवः, (तत्र मल्लिनाथः)।
४. क्षुर इव पृणाति हिनस्ति वेति क्षुरप्रः = बाणविशेषः, (हलायुधः)।
५. 'इषीका काशमुच्यते' हलायुधः। काशं तृणविशेषः, तन्निर्मितमस्त्रम्। ६. कङ्को बकः।

**(ग) समन्त्रकमस्त्रग्रहणम्**—सविधि समन्त्रकञ्च गृहीतं तथा मन्त्रप्रेरितमस्त्रं शक्तिशालि भवतीति रामायणमहाभारतादौ वर्णितमास्ते। कालिदासेनाप्येष विधिरनुष्ठितः, यथा—'अशिक्षतास्त्रं पितुरेव मन्त्रवत्' (रघु० ३।३१), 'नैऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदान-तोषितात्' (रघु० ११।२१), 'सम्मोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्' (रघु० ५।५७)। प्रयोगे संहारे च पृथक् पृथङ् मन्त्रयुक्तं सम्मोहनं नामास्त्रं करिरूपान्मुक्तो गन्धर्वः प्रियम्बदोऽजाय प्रादात्। अजोऽपि नर्मदायाः पवित्रं पयः पीत्वा उत्तराभिमुखः सन् समन्त्रमस्त्रमगृह्णात्—

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्॥ (५।५९)।

मन्त्रप्रेरितस्य शरस्यामोघता, यथा—

तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत्।
स रावणशिरःपंक्तिमज्ञातव्रणवेदनाम्॥ (रघु० १२।९९)

**(घ) युद्धोचितवेशभूषा**—युद्धेऽङ्गानां संरक्षणाय कवच-शिरस्त्राण-हस्तावापाद्यनेकानि साधनानि वर्णितानि सन्ति। वैदिकसाहित्येऽपि युद्धोचितवेशभूषाया वर्णनं दृश्यते। ऋग्वेदे शिरस्त्राण-वक्षस्त्राण-चर्म-कटकादिधारिणां मरुतां सैनिकरूपवर्णनमतीव रमणीयमस्ति—

अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः।
अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितताः हिरण्ययीः[1]॥

कुमारसम्भवे कालिदासः कुमारस्येन्द्रस्य च प्रस्थानकालोचितं चारुवेशं वर्णयन्—

प्रस्थानकालोचितचारुवेशः स स्वर्गिवर्गैरनुगम्यमानः (कुमारः १३।१)
प्रयाणकालोचितचारुवेशभृद् वज्रं वहन् पर्वतपक्षदारणम् (इन्द्रः १४।५)

स्वकीयां युद्धोचितवेशभूषाभिज्ञतामभिव्यनक्ति। रघुवंशे युद्धोचितवेषभूषा, यथा—

रथी निषङ्गी कवची धनुष्मान् दृप्तः स राजन्यकमेकवीरः। (इत्यादि ७।५६)

कालिदासेन कवच-शिरस्त्राण-हस्तावापाद्यङ्गत्राणानामुल्लेखः कृतः, यथा—

आसीत् कवचविच्छेदो वीराणां मिलतां मिथः। (कुमार० १६।५)
निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः समुत्थितैः। (कुमार० १६।६)
तनुत्यजां वर्मभृतां विकोशैः। (रघु० ७।४८)
मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम्। (रघु० १२।८६)
एष गृहीतविद्य आयुः साम्प्रतं कवचहरः संवृत्तः—(विक्रमो० ५।१२ तः परम्)
अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः। (रघु० ४।६४)
भर्तः! एतद्धस्तावापसहितं शरासनम्—(विक्रमो० ५।१३ तः परम्)।

---

१. ऋग्० ५।५४।११।

(ङ) **सेनाङ्गानि**—हस्तिनः, अश्वाः, रथाः पदातयश्चेति चत्वारि सेनाङ्गानि । **'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्'** इत्यमरकोशः २।८।३३ । अत एव चतुरङ्गिणी सेनेति प्रथा। कालिदासेनापि समानयुद्धं वर्णयता सेनायाश्चतुरङ्गस्योल्लेखः कृतः—

**पत्तिः पत्तिमभीयाय रणाय रथिनं रथी ।**
**तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥** (कुमार० १६।२)

**पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् ।**
**यन्ता गजस्याभ्यपतद् गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥** (रघु० ७।३७)

विजिगीषुर्नृपतिश्चतुरङ्गबलान्वितः सन् विजयाय प्रतिष्ठते ।

कालिदासेन नौसेनाया अप्युल्लेखः कृतः—

**वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।** (रघु० ४।३५)

रामायणेऽपि सुसंघटिताया नौसेनाया उल्लेखोऽस्तीति युद्धप्रकारप्रकरणे पूर्वमुक्तमेव ।

स्मृतिग्रन्थेषु विजयाय प्रस्थितस्य राज्ञः षड्विधं बलमपेक्षितमिति वर्णितमास्ते—

**संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।**
**सांपरायिककल्पेन यायादरिपुरं शनैः ॥** (मनु० ७।१८५)

कुल्लूकभट्टेनात्र षड्विधबलस्य व्याख्या एवं कृता—**'हस्त्यश्वरथपदातिसेनाकर्मकरात्मकं षड्विधं बलम्'** ।

कालिदासेनापि विजयाय प्रस्थितस्य रघोः षड्विधबलस्यापेक्षितत्वं निर्दिष्टम्—

**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया**[1] ।

मल्लिनाथेनात्र षड्विधबलस्य व्याख्या एवं कृता—

**मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम् ।** इति कोशः ।

कालिदासेन राज्ञोऽतिथेरपि षड्विधबलस्य विनियोगत्वं वर्णितम्—

**स गुणानां बलानाञ्च षण्णां षण्मुखविक्रमः**[2] ।

इदं षड्विधं बलं सेनायाः प्रकारविशेषः—

(१) मौलं बलम् = वंशपरम्परागतसैनिकाः । (२) भृत्यं बलम् = वैतनिकाः सैनिकाः । (३) सुहृद्बलम् = मित्रराज्यस्य सैनिकाः । (४) श्रेणीबलम् = सैनिकानां विभागविशेषाः । (५) द्विषद्बलम् = शत्रुपक्षतो गृहीताः विश्वस्ताः सैनिकाः । (६) आटविकं बलम् = वनवासिनो वनभूमेरभिज्ञाः सैनिकाः । सर्वेषु बलेषु हस्तिबलस्य प्राधान्यमिति कालिदासस्याभिमतम् । यथाह सः—

**सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कण्टकभेदिभिश्च ।**
**सर्वप्रयत्नेन च भूमिपालास्तस्मिन् प्रजह्रुर्युधि सर्व एव ॥**[3]

---

१. रघु० ४।२६ । २. रघु० १७।६७ । ३. रघु० ७।५९ ।

अत्र 'सर्वैर्बलाङ्गैः', 'कण्टकभेदिभिः' (कवचभेदिभिः), 'सर्वायुधैः, तथा (आभ्यन्तरेण)' 'सर्वप्रयत्नेन' इति वचनं कालिदासस्य युद्धसाधनाभिज्ञतामभिव्यक्तीकरोति । अस्मिन् प्रसङ्गे कालिदासस्य गजलक्षणज्ञताऽप्युल्लेखनीयास्ति । युद्धे गम्भीरवेदिनो गजविशेषा विशेषत उपयोगिनो भवन्तीति विद्वान् कालिदासो रघोर्दिग्विजयक्रमे गम्भीरवेदिनो गजस्योल्लेखं करोति—

**अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ।**[1]

यो गम्भीराघातमपि चिरकालेन वेत्ति स गम्भीरवेदीति संज्ञको गजः ।

**त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि ।**
**आत्मानं यो न जानाति स स्याद् गम्भीरवेदिता ॥**

(इति राजपुत्रीये, इति तत्र टीकायां मल्लिनाथः) ।

**(च) युद्धे भौगोलिकं ज्ञानम्**—युद्धयात्रायां भौगोलिकज्ञानस्य सांग्रामिकं महत्त्वमस्ति । स्वस्य देशस्य शत्रोर्देशस्य च भूमेर्नगराणां नदीनां वनानां पर्वतानाञ्च परिज्ञानं संरक्षणस्याक्रमणस्य च दृष्ट्याऽत्यावश्यकम् । नदी, वनम्, पर्वतः, उपत्यका, मरुभूमिः, पङ्किलाभूमिश्च प्राकृता अवरोधाः सन्ति । संरक्षणस्य दृष्ट्या इमेऽवरोधाः सहायकाः, आक्रमणस्य दृष्ट्या इमे बाधकाः सन्ति । कौटल्यस्य मतानुसारं प्रत्येकजनपदस्य सीमायां नदी-पर्वत-वन-कृत्रिम-प्राकारादीनां स्थितिरावश्यकी[2] । एष्ववरोधेषु नद्याः स्थानं सर्वाधिकं महत्त्वपूर्णमस्ति । प्राचीनकाले नदीमार्गेण सेना अग्रेसरति स्म । कालिदासो नदीनां सांग्रामिकं महत्त्वं जानाति स्मेति । रघोर्दिग्विजयप्रयाणवर्णने सम्यक् स्पष्टतामेति । दिग्विजयाय प्रस्थितस्य रघोः सेना पूर्वसागरतटेन गच्छन्ती कपिशा-कावेरी-ताम्रपर्णी-मुरलानदीः प्राप । एवं नदीवर्त्मना प्रस्थितो रघुः केवलं पारसीकान् जेतुं स्थलवर्त्मना प्रतस्थे । अस्यां विजययात्रायां स महेन्द्र-मलय-दर्दुर-त्रिकूटपर्वतानुल्लंघ्य सिन्धुतटेनोत्तरदिशां प्रस्थितोऽश्वसैन्यैः सह हिमालयमारुरोह । ततोऽवतीर्य कैलासमगत्वैव स लौहित्यनदीं तीर्णः कामरूपदेशाधिपतिं जिगाय । इत्थं स भारतवर्षस्य चतुर्दिशां राज्यानि हस्तगतान्यकरोत् । रघोः सेना आवश्यकतानुसारं कदाचित् स्थलमार्गेण, कदाचिन्नदीमार्गेण गच्छति स्म, कदाचित् पर्वतानध्यारोहति स्म । कदाचित् सा सौविध्यानुसारं मार्गनिर्माणं करोति स्म—

**मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।**
**विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥**[3]

एतत् सर्वं कालिदासस्य सैन्यमार्गमर्मज्ञतां सामरिकं भौगोलिकं ज्ञानञ्च प्रकटीकरोति । मनुनाऽपि मार्गपरिज्ञानस्यावश्यकता प्रतिपादिता—

**संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।**[4] इत्यादि ।

---

१. रघु० ४।३९ ।  २. अर्थशास्त्रम्, अ० २ ।
३. रघु० ४।३१ ।  ४. मनु० ७।१८५ ।

**उपसंहारः**— कालिदासस्य ग्रन्थेषु वर्णितानां युद्धस्वरूपाणाम्, युद्धप्रकाराणाम्, युद्धधर्माणाम्, युद्धस्योपकरणानां वाहनायुध-वेशभूषा-सेनाङ्गरणवाद्यास्त्रग्रहणविधिभौगोलिकज्ञानादीनां विश्लेषणेनेदं सुस्पष्टतां व्रजति यत् स युद्धविज्ञानेऽप्यसाधारणप्रतिभानवान् विद्वानासीत् । तस्य रघुवंशे युद्धविज्ञाने व्यवहृतानाम् 'आलीड-वाजिनीराजनाप्रभृतिपारिभाषिकशब्दानां प्रयोगेण युद्धादन्यत्र गजवधः प्रतिषिद्धः[1]' इति युद्धशास्त्रीयसिद्धान्तस्य संकेतेन चेदं सुतरां प्रत्यक्षतामेति यत् स धनुर्वेदस्यापि सम्यक् परिशीलनं कृतवानासीत् ।

आलीढमिति धनुर्वेदीयः संज्ञाशब्दः । यादवकोशे आलीढशब्दस्येयं व्याख्या विद्यते—

**स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् ।**
**त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥**
**अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रतः ।**
**दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥**

(रघु० ३।५२ मल्लिनाथः)

वैशाख (विशाख)-मण्डल-समपादालीढ-प्रत्यालीढेति पञ्च धनुर्धारिणां स्थानानि । 'स्यात् प्रत्यालीढमालीढमित्यादिस्थानपञ्चकम्[2] ।' दक्षिणं पादमग्रेकृत्वा वाममाकुञ्च्य स्थानम् आलीढम् । कालिदासेनालीढशब्दस्य प्रयोगो रघुवंशे इन्द्र-रघुयुद्धप्रसङ्गे कृतः—**'अतिष्ठदालीढविशेषशोभिना[3]'**······इत्यादि ।

एवमेव वाजिनीराजनेत्यत्र नीराजनाशब्दो नीराजनेत्याख्यशान्तिकर्मणो वाचकः । एतत् शान्तिकर्म आश्विने मासे युद्धयात्रायाः पूर्वं राजा सेनापतिर्वा विविधशस्त्रास्त्रसहितो वेदमन्त्रपूर्वकं विधत्ते । कालिदासोऽपि शरद्दतौ रघोर्दिग्विजययात्रारम्भेऽस्य कर्मण उल्लेखं कृतवानास्ते[4] ।

अस्मिन् सन्दर्भे कालिदासस्य युद्धविचारोऽप्युल्लेखनीयोऽस्ति । युद्धस्य सम्बन्धे कालिदासस्य विचारोऽस्ति वर्णाश्रमधर्मस्य व्यवस्थायै सतां रक्षणाय च दुष्टानां दमनार्थं युद्धमावश्यकमिति । कुमारसम्भवे कुमारस्ताकारसुरेण क्लेशितानां देवानां रक्षणार्थं युद्धं करोति । रघुवंशे रामोऽत्याचारिणा रावणेन प्रपीडितानां तापसानां मुनीनां देवानाञ्च परित्राणाय सीतायाः समुद्धाराय च युद्धं करोति । लक्ष्मणानुजः शत्रुघ्नो यमुनातटवासिनां लवणासुरेण विलुप्तयागक्रियाणामत एव शरणागतानां मुनीनां रक्षार्थं युद्धं करोति । रामो वर्णाश्रमधर्मविरुद्धाचारिणः शम्बूकनाम्नः शूद्रस्य वधं करोति—

**इत्याप्तवचनाद्रामो विनेष्यन् धर्मविक्रियाम् ।**[5] इत्यादि ।

विक्रमोर्वशीये पुरुरवा उर्वश्यास्त्राणाय दुर्जयदानवेन केशिना सह युद्धं करोति । अभिज्ञानशाकुन्तले राजा दुष्यन्तो देवराजस्येन्द्रस्य साहाय्याय दुर्जयनामदानवगणेन सह युद्धं करोति ।

---

१. रघु० ८।७४ । २. अमरकोशः २।८।७५ । ३. रघु० ३।५२ ।
४. रघु० ४।२४–२५ । ५. रघु० १५।४८ ।

कालिदासस्य युद्धस्योद्देश्यं शत्रूणां समुन्मूलनं न, अपि तु तेषां विनमनमस्तीति तस्यानयोक्त्या प्रतीयते—

न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥[1]

शासकेन नातिखरेण (नातिकठोरेण) नातिमृदुना (कोमलेन) भाव्यम् । तेन मध्यमवृत्तिमाश्रित्य शत्रवो नमयितव्याः, न तूत्पाटयितव्याः । अत एव रघुः स्वीये दिग्विजयसंरम्भे वैतसीं वृत्तिमाश्रित्य शरणागतान् शत्रून् नृपान् पुनस्तेषां राज्ये संस्थापयामास, न तु तेषां समूलमुन्मूलनं कृतवान् । महाकवेः कालिदासस्यैष युद्धादर्शः सर्वथा श्लाघ्यः, सर्वदा व्यवहार्यश्च ।

॥ इति शम् ॥

● ● ●

१. रघु० ८।९ ।

# वेदस्मृतिपुराणानामेकत्वविमर्शः

डॉ० श्रीकृष्णमणित्रिपाठी

पुराणविभागाध्यक्षचरः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी

वेदेभ्य उद्धृत्य समस्तधर्मान्
योऽयं पुराणेषु जगाद देवः ।
व्यासस्वरूपेण जगद्धिताय
वन्दे तमेनं कमलासमेतम् ॥

नह्यविदितचरमस्ति केषाञ्चिदपि विपश्चितां यज्जगदिदानीं यदभिमुखं दृश्यते तद् आगमिष्यन्त्या विभीषिकातो रक्षितुमलं चेत् किञ्चित्तर्हि भारतीया संस्कृतिरेव । सा च वेदप्राणा, वेदानां सम्यगवगतये यावन्ति सन्ति साधनानि तेषां मूर्धन्यता पुराणानामेव । तेषु हि विद्यते वेदोक्तसूक्ष्मतत्त्वानां सविस्तरं व्याख्यानमेवेति निश्चप्रचम् ।

भारतीयार्यसंस्कृतेः सम्यक् परिशीलनार्थं वेदानां तन्मूलकस्मृतितन्त्राणां च समीक्षणमावश्यकं तथा वेदोपवृंहकाणामितिहासपुराणानां परिज्ञानम् । साम्प्रतं वैदिकशैल्या कर्मोपास्तिसंवित्तरीणामुच्छिन्नतयाऽगाधाचरसंसारार्णवमुत्तरीतुमशक्नुवतामुद्धाराय च श्रुतिस्मृत्यप्रतिकूलम् आयाससाध्यप्रचुरवस्त्वनपेक्षपौराणिकवर्त्मैव परमं श्रेयस्करम् । पुराणमहोदधावगाहननिपुणतायै विचाराणां प्रामाणिकतायै च वेदानामनुशीलनं नितान्तमावश्यकम् । अत एव निखिलशास्त्रपारावारपारदृश्वभिर्वेदवाङ्मयगुणगौरवाकृष्टहृदयैः सहृदयैः प्रेक्षावद्भिरनिवार्यतया वेदानामध्ययने बलं दत्तमस्ति—**'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च'**[1] ।

भारतीयसंस्कृतेर्मूलमाधारः सन्ति वेदाः, यतो हि वेदानामक्षुण्णा विचारधारैव भारतीयसंस्कृतिद्वारा नित्यं निरन्तरं प्रवाहिता भवति । वेदानां व्यापकप्रभावादेवानेकैराक्रमणैः सद्भिरप्यद्यत्वेऽपि भारतीया संस्कृतिरबाधगत्या पूर्ववत् प्रचलति । अत एव प्राचीनेषु वाङ्मयेषु वेदानां महत्त्वं विविधैः प्रकारैर्गीतमस्ति । वेदानामनुशीलनेन प्राणिनो लौकिकं पारलौकिकं चाभ्युदयं सम्पादयन्तः स्वं स्वं जीवनं समुन्नतिशीलं विधातुं शक्नुवन्ति । मानवजीवने ये ये विभिन्नाः प्रसङ्गा उपतिष्ठन्ते, तेषां तेषां मार्गप्रदर्शनस्य क्षमता वैदिकविचारधाराया एकं वैशिष्ट्यं विद्यते ।

मानवजीवनस्य कर्तव्यविषये वैदिकविचारधाराया दृष्टयो न सन्ति एकाङ्गिन्यः, अपि तु ताः सन्ति सार्वभौमाः । परम्पराप्राप्तभारतीयदृष्ट्या वेदाः सन्ति, भ्रमप्रमादविप्रलिप्साकर्णापाटवादिपुंदोषशङ्काकलङ्कपङ्करहितत्वेनापौरुषेया अनादयो नित्याश्च । अत एव **'वेदोऽखिलं धर्म-**

---

१. महाभाष्यम्—पस्पशाह्नि० ।

मूलम्[1]' इत्यनुसारं वेदमूलको धर्मोऽपि सनातनः, अपरिवर्तनशीलश्चास्ति। अतो धर्माचरणस्य मूलमाधारो वेद एवाभिमतोऽस्ति। वेदमूलकत्वादेव मनूक्तेरपि प्रामाण्यमङ्गीक्रियते[2]। तत्सम्बन्धे कस्यापि क्रमिकविकासस्य ह्रासस्य विचारस्य च कृते नास्ति किमपि स्थानम्, किन्तु वैज्ञानिकदृष्ट्यनुसारमितरमानवीयविचारधारावद् वैदिकविचारधाराप्यस्माकमन्वेषणस्यास्ति विषयः[3]।

प्राचीने काले वैदिकविचारधाराया भव्यभावना मानवजीवनस्य कर्तव्यविषयेष्वासीदतिव्यापिका।

अत्र नास्ति कश्चन सन्देहलेशो यदुत्तरकालिकाभिर्विभिन्नधाराभिरपि भारतीयसंस्कृतेः समये समये महानुपकारो जातः; अथापि मानवीयजीवननिमित्तं लौकिकाभ्युदयोपयोगि शिक्षाऽऽदर्शदृष्ट्या वैदिकविचारधाराया व्यापकं क्षेत्रं न केवलं भारतीयानामेव कृते गौरवस्यास्ति विषयः, प्रत्युत विदेशीयानामपि कृते गर्वस्यास्ति वस्तु। वैदिकविचारधाराया व्यापकं क्षेत्रं समस्ताया जातेः, सार्वभौमस्य सार्वकालिकस्यादर्शमयस्य सन्देशस्य चोपस्थापकमस्ति।

वैदिकविचारधाराया मानवीयः पक्षो विश्वशान्तेर्विश्वबन्धुत्वस्य चोदात्तया भावनया संवलितो वर्तते। वैदिकमन्त्रेषु स्थले स्थले मानवमात्रस्य कृते परस्परं सौहार्दस्य साहाय्यस्य मित्रतायाश्च भावनानामुदात्त उपदेशो विद्यते। यथा ऋग्वेदे **'पुमान् पुमांसं परिपातु विश्वतः[4]'**, अर्थात्—एकेन पुंसा द्वितीयस्य पुंसः संरक्षणं मानवमात्रस्यास्ति पुनीतं कर्तव्यम्। यजुर्वेदे—**'मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे[5]'** अर्थादहं न केवलं मानवमात्रम्, अपि तु समस्तान् प्राणिनो मित्रदृष्ट्या पश्येयम्। एवमथर्ववेदेऽपि—**'कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः[6]'** अर्थात् भो जनाः! सर्वे वयं मिलित्वा एवं प्रार्थनां कुर्यामो येन मनुष्येषु सुमतेः सद्भावनायाश्च विस्तारः स्यात्। इत्थं मानवमात्रं प्रति कल्याणभावनायाः सद्भावनायाः सौहार्दस्य च समुद्बोधका अनेके मन्त्रा वेदवाङ्मये राराजन्ते।

एवमुत्कृष्टमानवीयपक्षेण सहैव वैदिको विचारधारा उदात्तानामादर्शानां रक्षायै वीरोचितैः सङ्घर्षैर्युद्धस्यावश्यकताभिश्चापरिचिता नास्ति। **'सत्यं वै देवा अनृतं मनुष्याः'** इति सिद्धान्तानुसारं देवा वास्तविकताया अनुगामिनो भवन्ति, मनुष्याश्च स्वभावतस्तत्प्रतिकूलमप्याचरन्तीति, मनुष्याणां व्यवहारः प्राय आदर्शवादतो दूरे तिष्ठति। एवंविधायां परिस्थितौ विश्वशान्तेः विश्वबन्धुत्वस्य च मार्गे गन्तुमीहमानैर्महापुरुषैः स्वकीयोत्कृष्टानामादर्शानां रक्षायै आत्मनो रक्षायै च विरोधिभिः सह सङ्घर्षस्य तेषां दमनस्य, बाधकैः शत्रुभिः साकं युद्धस्य चावलम्बनं नितरा-

---

१. मनुस्मृतिः—२।६।

२. यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥ (मनुस्मृतिः २।७)

३. यच्चापि लौकिकं वस्तु संस्था आचारपद्धतिः।
भावैः संप्रेरितस्यैव मानवस्येह सा कृतिः॥ (रश्मिमाला २८।२)

४. ऋ० सं—६।७५।१४। ५. यजुर्वेदः—३६।१८। ६. अथर्ववेदः—३।३०।

मपेक्षितं जायत इत्यभिप्रायो वैदिकविचारधारयाऽप्रच्छन्नो नास्ति । अतो वैदिकमन्त्रेषु स्पष्टतया प्रतिपादितमस्ति यत्त्वया नूनमवधेयं यत् तव वास्तविकसमुन्नतेर्बाधकाश्शत्रवस्त्वयि विजयं प्राप्तुं न शक्नुयुः । सभाजयति च श्रुतिः–'**मा त्वा परिपन्थिनो विदन्**[१]' इति । यो हि निष्कारणमस्मान् द्वेष्टि, अतस्तं वयमपि स्वद्वेष्यं मन्यामहे, तं वयं सर्वदा विश्वकल्याणकारिणीभ्यः शक्तिभ्यः समर्पयामः, यतस्ताः, तं संहरेयुः । तथा हि श्रुतिः—'**योऽस्मान् द्वेष्टि यं वयं द्विष्मः तं वो जम्भे दध्मः**[२]' इति । एवं प्रकारिकाया आदर्शरक्षाया आत्मरक्षायाश्च वीरोचितभावनया परिपूर्णा हृदयस्पर्शिनो बह्वो वेदमन्त्रा ऋग्वेदस्य दशमे मण्डले, अथर्ववेदस्य च सौमनस्यसूक्ते समुपलभ्यन्ते ।

वैदिकविचारधारायाः समाजिकमपि जीवनमत्यन्तं व्यापकं विद्यते । स्वभावतो वैयक्तिकेषु स्वार्थेषु लिप्तानां मानवानां समक्षे समाजस्योन्नतय आत्मरक्षार्थं च समष्टिभावनोपस्थापनाय वेदेषु बह्वो मन्त्रा निर्दिष्टाः सन्ति, यत्र समष्टिभावनायाः समुद्बोधनमस्ति यत्— 'अरे मानवाः ! भवन्तः समष्टिभावनया सहैव कार्येषु प्रवृत्ता भवन्तु, ऐक्यमत्येन तिष्ठन्तु परस्परं सद्भावेन च व्यवहरन्तु—

१. (क) **सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथापूर्वे संजानाना उपासते ॥**[३]

(ख) **अग्ने नय सुपथा राये** (य० वे० ४०।१६) ।

(ग) **भद्रं कर्णेभिः शृणुयाम देवाः** (य० वे० २५।२१) ।

वैदिकविचारधारायाः सामाजिकजीवनस्य सुव्यवस्थायै वर्णाश्रमव्यवस्थायामपि बलं दत्तमस्ति । चतुर्ष्वपि वेदेषु विश्वव्यापिनो विराट्पुरुषस्य वर्णनप्रसङ्गे ब्राह्मणो विराट्पुरुषस्य मुखस्थानीयः, क्षत्रियो बाहुस्थानीयः, वैश्य उरुस्थानीयः, शूद्रश्च पादस्थानीयः प्रोक्तो विद्यते—

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।**
**उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥**[४]

मन्त्रोऽयमालङ्कारिकप्रक्रियाद्वारा ब्राह्मणादिषु चतुर्षु वर्णेषु परस्परमङ्गाङ्गिभावं सम्बन्धमभिव्यञ्जयति । यथा शरीरे मुखतः पादपर्यन्तं सर्वेष्वङ्गेषु परस्परमङ्गाङ्गिभावस्यान्योन्यमाश्रयाश्रितभावसम्बन्धो भवति, तथैव समाजरूपिणि शरीरे चतुर्णामपि वर्णानां परस्परं दृढतरः सम्बन्धोऽस्ति। शरीरे किमप्यङ्गमन्यमङ्गं नोपेक्षते । एकस्याङ्गस्य पीडायां सर्वाण्यप्यङ्गानि व्याकुलीभवन्ति, नापि किमप्यङ्गं स्वार्थम्, अपि त्वन्येषामङ्गानां हितार्थमेव कार्यं कुरुते ।

वस्तुतः कस्यापि समुन्नतस्य समाजस्य विभिन्नानामङ्गानां परस्परं सम्बन्धविषये इतोऽन्यद् दृष्टान्तं भवितुं नार्हति ।

एवमयं मन्त्रः स्पष्टतया सभ्यसमुन्नतसमाजस्य विभिन्नान्यङ्गानि चतुर्षु वर्गेषु विभज्य तेषु परस्परं घनिष्ठस्याङ्गाङ्गिभावस्यादर्शमयं सम्बन्धं प्रतिपादयति । सम्बन्धोऽयं पारस्परिक-

१. यजुर्वेदः–४।३४ । २. अथर्ववेदः–७।९३ ।
३. ऋ० सं० १०।१९१।२ । ४. तदेव–१०।९०।१२ ।

सहयोगस्य सामञ्जस्यस्य चाधारेण भवितुमर्हति, नान्यथा। अत्रेपदपि सङ्घर्षभावना तं सम्बन्धं समूलं नष्टुं पर्याप्ता भवितुमर्हति। समाजस्यैवंविधं चित्रणं वैदिकविचारधाराया व्यापिकाया वैज्ञानिकदृष्टेरेकं समुज्ज्वलं निदर्शनमस्ति।

एवं चतुर्णां ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्न्यासाश्रमाणामपि विवेचनेन साकं द्वयोः ब्रह्मचर्य-गृहस्थाश्रमयोः सम्बन्धे वेदमन्त्रेषु यो भव्य उत्कृष्टश्च विचारो व्यक्तीकृतोऽस्ति, स भारतीयसंस्कृतेर्बहुमूल्यो निधिरस्ति।

राजनीतिकस्यादर्शस्य सम्बन्धेऽपि वैदिकविचारधाराया व्यापिका दृष्टिरस्ति। वैदिकविचारधारायाः सर्वतो वैशिष्ट्यं तद्व्यापकदृष्टौ निहितमस्ति। तस्या उद्देश्यमिदमेवास्ति यद् मानवश्चतुर्णामपि पुरुषार्थानां धर्मार्थकाममोक्षाणामभ्युदयस्य निःश्रेयसस्य च प्राप्तिं नूनं कुर्यादिति। इत्थं वैदिकविचारधाराया व्यापिका दृष्टिः सर्वोन्नतस्य राष्ट्रस्य कृते एकं सुन्दरं निदर्शनं वर्तते।

एवंविधानां सर्वजनहितकारिणामुत्कृष्टविचाराणां भावनया ओत-प्रोतवेदानामुपबृंहणार्थमितिहासस्य पुराणस्य च निर्माणं जातमस्ति। तत्र मनोमुग्धकारिणो ज्ञानस्य विज्ञानस्य च पर्याप्ता चर्चा कृताऽस्ति। महर्षिणा व्यासेनालौकिक्या तपस्यया परमात्मनोऽनुकम्पया वेदानां यथार्थमर्थमवगत्य तत्प्रचारप्रसारयोरावश्यकतामनुभूय पुराणेतिहासयोः प्रणयनं कृतम्। वेदेषु ये विषया गूढतया सूक्ष्मरूपेण निर्दिष्टाः सन्ति, तेषामेव पुराणेतिहासयोः प्रपञ्चः कृतोऽस्ति। अत एवेतिहासपुराणद्वारा वेदानामुपबृंहणस्य सङ्केतः कृतो वर्तते[1]।

पुराणेन साकमितिहासस्यास्ति घनिष्ठतमः सम्बन्धः। प्राचीनग्रन्थेषु द्वयोर्नाम सम्मिलितरूपेण सहैवोपलभ्यते, यथा छान्दोग्योपनिषदि **'इतिहासपुराणं पञ्चमं वेदानां वेदम्[2]'** इति। वात्स्यायनेन न्यायभाष्ये विषयभेदेन साहित्यस्य त्रयो भेदाः कृताः सन्ति, यज्ञो लोकचरितं व्यवहारव्यवस्थापनं च। तत्र यज्ञो मन्त्रब्राह्मणात्मकस्य वेदस्यास्ति विषयः, लोकचरितमितिहासपुराणस्य विषयः, व्यवहारव्यवस्थापनं धर्मशास्त्रस्यास्ति विषयः। ततः स्कन्दपुराणेन लोकप्रसिद्ध्या तद्भिन्नत्वेनाङ्गीकृतम्[3]। अत एव शुक्रनीतौ तयोर्लक्षणं भिन्नं भिन्नं कृतम्[4]। निरुक्तेऽपि यास्काचार्येण भिन्नं भिन्नं लक्षणमभिहितम्[5]।

---

१. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति॥ (म० भा०, आ० प० १।२६७)

२. छा० उ० ।७।१।२।

३. इतिहासपुराणानि भिद्यन्ते लोकगौरवात्। (कु० ख० ४०।९८)

४. (क) प्राग्वृत्तकथनं चैव राज्यकृत्यमिषादितः।
यस्मिन् स इतिहासः स्यात् पुरावृत्तं स एव हि॥ (४।९२)
(ख) सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं यस्मिन् पुराणं तद्धि कीर्तितम्॥ (४।९३)

५. पुराभवं पुराणम्। इति ह आस इतिहासः।

अत्र पुराणशब्दस्य तात्पर्यमस्ति यत् पुराणं सदपि नवीनमस्ति। अर्थाद् यच्छास्त्रं पुरातनघटनानां वर्णनं विदधत् सदपि वर्तमानां भविष्यन्तीं च घटनां वर्णयति, तदस्ति पुराणम्। यच्च शास्त्रं केवलं प्राचीनानामेव घटनानां वर्णनं करोति, सोऽस्ति इतिहासः।

एवमनेकस्थलेषु इतिहासपुराणशब्दौ सहैव पृथक् पृथक् प्रयुक्तौ स्तः। अत एव विद्वद्भिरेकं द्वितीयस्य पूरकमङ्गीकृतमस्ति। एवमितिहासपुराणशब्दौ कदाचन भिन्नभिन्नयोरर्थयोः प्रयुक्तौ स्तः, कदाचिदेकस्मिन्नेवार्थे प्रयुक्तौ स्तः। अत एवामरकोषेऽमरसिंहेन यल्लक्षणमितिहासस्य कृतम्, तदेव लक्षणं नीलकण्ठेन महाभारतटीकायां पुराणस्य कृतं विद्यते। 'इतिहासः पुरावृत्तम्' (अ० को० १।५), 'पुराणं पुरावृत्तम्' (अ० को० १।५।१) इति।

एवं पुराणे इतिहासशब्दस्य इतिहासे च पुराणशब्दस्यापि प्रयोगो दृश्यते। यथा मत्स्यपुराणे—'अत्राप्युदाहरन्तीममितिहासं पुरातनम्' (१७।६), महाभारते च—'द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा' (१।१।१७) इत्यादि।

याज्ञवल्क्यानुसारं त्वितिहासापेक्षया पुराणस्य क्षेत्रं विस्तृतं विद्यते। तेन याज्ञवल्क्यस्मृतौ चतुर्दशविद्यानां गणनाप्रसङ्गे[1] केवलं पुराणस्यैव गणना कृताऽस्ति, नेतिहासस्यापि, किन्तु तत्र विद्वद्भिः पुराणमितिहासस्योपलक्षकं मत्वा पुराणे इतिहासस्यान्तर्भावं विधाय तस्यापि विद्यात्वमङ्गीकृतम्। राजशेखरो हीतिहासं पुराणप्रभेदं मनुते।

ब्रह्मवैवर्तपुराणीयश्रीकृष्णजन्मखण्डानुसारं महाभारतमितिहासः, वाल्मीकिरामायणं च काव्यमुच्यते[2]। परन्तु काव्यमीमांसायां कविवरेण राजशेखरेण इतिहासस्य द्वौ भेदौ कृतौ स्तः, परिक्रिया, पुराकल्पश्च। तदनुसारमेकनायिकाकथा परिक्रिया तथाऽनेकनायिकाकथा पुराकल्पः प्रोच्यते[3]। तथा चानेकनायककथाविशिष्टत्वेन महाभारतस्य, एकनायककथासनाथत्वेन रामायणस्य च ग्रहणादितिहासपदेनोभयोरपि ग्रहणादुभयमपीतिहासत्वेन गृह्यते विद्वत्समाजे।

कौटल्येन तु स्वकीयेऽर्थशास्त्रे पुराणानां गणना इतिहासाभ्यन्तरे कृताऽस्ति। तस्य दृष्टौ इतिहासस्य क्षेत्रं पुराणापेक्षयातिविस्तृतं वर्तते। तेन पुराणम्, इतिवृत्तम्, आख्यानम्, उदाहरणं धर्मशास्त्रं चेतिहासान्तर्गतं स्वीकृतम्–'पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रं चेतिहासः[4]'।

यथा पुराणं मुख्यतया सर्गविसर्गादीनां पञ्चानां विषयाणां वर्णनेन सह धर्म-दान-व्रत-यज्ञ-तीर्थ-भक्तिप्रभृतीनामपि पर्याप्तमात्रया वर्णनं करोति, तथैवेतिहासोऽपि संस्कृतसाहित्ये न केवलं प्राक्तनानां घटनानामेव वर्णनं विधत्ते, प्रत्युत विभिन्नव्यावहारिकविषयाणामपि शिक्षां प्रदाय

---

१. पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ (१।३)

२. इतिहासो भारतं च वाल्मीकं काव्यमेव च। (१३१।२३)

३. परिक्रिया पुराकल्प इतिहासगतिर्द्विधा।
स्यादेकनायिका पूर्वा द्वितीया बहुनायिका॥ (का० मी० २)

४. अर्थशास्त्रम् ५।१४।

मानवहृदयस्य मोहान्धकारमपि निरस्यति, यस्य सङ्केतो महाभारते समुपलभ्यते[1]। अत एव महर्षिणा वेदव्यासेन तत्र प्रतिज्ञातं यद् धर्मार्थकाममोक्षेषु विषयेषु महाभारतेऽत्र न विचारितम्, तदन्यत्र नोपलभ्यते। यदिहास्ति वर्णितं तदेवान्यत्रापि वर्णितमुपलभ्यते[2]। अत एव महाभारतस्य समालोचकानामस्ति सुनिश्चितं मतं यत् **'यन्न भारते, तन्न भारते'** इति। अतो महाभारतं संस्कृतसाहित्यस्य सर्वाङ्गपूर्णः सर्वमान्यश्चैकोऽद्भुत इतिहासग्रन्थोऽस्तीति निर्विवादम्।

वेदविभाजन-महाभारतप्रणयनानन्तरं महर्षिणा व्यासेन भारतीयसंस्कृतिप्राणभूतानि अष्टादश पुराणानि निर्मितानि। वैदिकरहस्यज्ञानानुशीलननिमित्तं पुराणसाहित्यं नितान्तमुपादेयमस्तीति वेदेषु सूक्ष्मरूपेण वर्णितानां विषयाणां सम्यगवगतये आख्यानोपाख्यानगाथाकल्पशुद्धि-साहाय्येन पुराणानां प्रणयनं जातम्। तथा चोक्तं विष्णुपुराणे[3]। इत्थं गूढतया निर्दिष्टानां वेदविषयाणां भाष्यरूपेण विस्तारार्थं सरलतमायाः प्राञ्जलायाः संस्कृतभाषाया माध्यमेन कृष्णद्वैपायनो महर्षिर्वेदव्यासः पुराणानि रचयाञ्चकार[4]।

येन भगवता व्यासेन सार्वभौमा वेदा व्यस्ताः, अलौकिकं महाभारतं प्रणीतम्, चित्तवृत्तिनिरोधोपायप्रदर्शनार्थं योगभाष्यं विरचितम्, अद्वैततत्त्वविवेचकं ब्रह्मसूत्रं च निर्मितम्, तेनैव महर्षिणा व्यासेन पुराणानि निर्माय तत्र सर्वशास्त्रसिद्धान्तः प्रदर्शितः, उपकृतश्च मानवसमाजः। भगवतो व्यासदेवस्यानयाऽपूर्वया विशेषतया विवेकिनो विद्वांसः कथयन्ति यत् **'व्यासोच्छिष्टं जगत् सर्वम्'** इति। सर्वज्ञानमयस्य वेदस्य भाष्यरूपत्वात् पुराणानां तदर्थानुगामित्वं तदर्थप्रकाशकत्वं च स्पष्टं प्रतिपादितं स्कन्दपुराणस्य रेवाखण्डे[5]। तस्माद् वेद-पुराण-स्मृतीनामैक्यं निर्बाधं बोद्धव्यमिति शम्।



---

१. इतिहासप्रदीपेन मोहवारणघातिना।
लोकगर्भगृहं कृत्स्नं यथावत् संप्रकाशितम्॥ (१।१।८७)

२. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ (६।२।५६)

३. आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराणसंहितां चक्रे पुराणार्थविशारदः॥

४. विस्ताराय च वेदानां स्वयं नारायणः प्रभुः।
व्यासरूपेण कृतवान् पुराणानि महीतले॥ (ब्र० पु० ७।१९)

५. (क) यच्च दृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल।
उभाभ्यां यत्तु दृष्टं हि तत् पुराणेषु गीयते॥ (१।१४)

(ख) श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्।
एतत् त्रयोक्त एव स्याद्धर्मो नान्यत्र कुत्रचित्॥ (१।२३)

# भविष्यत्पुराणे देवस्वरूपस्य विकासः

श्रीरामजीतिवारी

**अनुसन्धाता—गोरखपुरविश्वविद्यालयः**

पुरा भारतवर्षे देवमन्दिराणि समधिकरूपेण प्रतिष्ठितान्यासन् । मन्दिराणां परिसरभूमिः सदा सर्वत्र स्वच्छा दिव्या पवित्रा च तिष्ठेदित्यत्र जनाः प्रयत्नशीला आसन् । मन्दिराणां पार्श्वे नदीनाम्, निर्झराणाम्, कूपानाम्, तडागानाम्, पुष्पोद्यानानाम्, वाटिकानाम्, शोभनानां पक्षीणां गोमृगादीनां च नियतरूपेण स्थितिः स्यादिति सर्वेषां धार्मिकाणां हृदयेऽभिलाषाऽऽसीत् । अस्मिन् प्रसङ्गे स्टेलाक्रैमरिसमहाभागया गोपीनाथरावमहोदयेन वनर्जीप्रभृतिमहोदयेनापि देवालय-शिल्पोपरि पर्याप्तरूपेण शोधकार्याणि कृतानि । क्रैमरिसमहाभागानाम् 'हिन्दू टेम्पुल' नामधेयो ग्रन्थस्तु अति प्रसिद्धोऽस्ति । तेन कथितं यद् देवतास्तत्रैव विराजन्ते यत्र हंसध्वनिरास्ते, नदीनां कलकलं च श्रूयते, पुष्पाणां च सौरभेण सौरभायितं भवति वातावरणम् । अत्रालङ्कारिकभाषया नदीनां कृते कङ्कणम्, हंसध्वनिकृते वाणी, जलार्थं च शृङ्गारपूर्णमलङ्कारम्, पुष्पाणां कृते कर्णाभूषणं नदीनां पुलिनानां कृते च देवानां वक्षःस्थलस्य प्रयोगं कृतमस्ति ।

सामविधानब्राह्मणे षड्विंशब्राह्मणे च इन्द्रवरुणादीनां प्रतिमानां विस्तृतरूपेण चर्चा अस्ति । प्रायेण राजानः स्वयशोविस्तारार्थं स्वर्गप्राप्त्यर्थं च मन्दिराणां निर्माणं कुर्वन्ति स्म । मन्दिरनिर्माणेन जायमानं पुण्यं यज्ञेभ्यो ह्यन्येभ्यश्च धार्मिककृत्येभ्यः प्राप्यमाणेन पुण्येन समधिक-मासीत् । भविष्यत्पुराणस्य ब्राह्मपर्वणस्त्रिंशदधिकशततमेऽध्यायेऽपि (१३० तमेऽध्याये) इदमेव चर्चितम् । एवमेव पाञ्चरात्रग्रन्थानां पञ्चत्रिंशत्संहितासु देवालयानां महिमा सम्यक्तया समुद्घाटिता अस्ति । अग्निपुराणस्य त्रिंशदध्यायात् पञ्चत्रिंशदध्यायं यावत् पाञ्चरात्रग्रन्थानां नामनिर्देशपुरस्सरं विषयस्यास्य सञ्चयं जातम् । विष्णुधर्मोत्तरपुराणस्यान्तेऽपि प्रायेण बृहत्सु दशाध्यायेषु सहस्रश्लोकेषु देवालयानां पूजोपकरणादीनाञ्च वर्णनं वर्तते । बल्लालसेन-महोदयेन तेषां सङ्ग्रहम् 'प्रतिष्ठासागरम्' इति ग्रन्थे कृतमासीत् । जैनधर्मावलम्बिभिर्बौद्धमतानुयायि-भिश्च हिन्दूनामनुकरणमस्मिन् विषये कृतमासीदित्यपि अवलोक्यते । डी० एन्० शुक्लमहोदयेन स्वरचितपुस्तकेऽपि 'कलापूर्णं तीर्थम्' इत्यभिहितम्[१] ।

**मन्दिरनिर्माणस्य प्रक्रिया**

हिन्दुशास्त्रानुसारेण देवालयनिर्माणतः पूर्वं स्थानस्य परीक्षणं भवति स्म । प्रायेण इमानि स्थानानि नदीनां तटे पर्वतीयोपत्यकायां भवन्ति स्म । इदं स्थानमुन्नतं भवति स्म । पृथ्वीतलाद् अस्थि, क्षारम्, अङ्गारम्, तुषादिकं दूरीकृत्य मन्दिराणां निर्माणं भवति स्म । भविष्यत्पुराणस्य ब्राह्मपर्वे शताधिकत्रिंशदध्यायस्य विषयस्य चर्चा अस्ति[२] । मत्स्यपुराणानुसारेण केषाञ्चिद्

१. 'हिन्दू साइन्स ऑफ आर्चिटेक्चर', भाग १, पृ० ४५५–५६ ।

२. शर्करातुषकेशास्थिक्षाराङ्गारविवर्जिता । (तत्रैव, १।१३०।४३)

बीजानां विकीरणं कृत्वा त्रिभिर्दिवसैर्बीजाङ्कुरं च दृष्ट्वा तत्रैव देवालयस्थापना भवति स्म। यत्र नासीदेतादृशी भूमिस्तत्र न देवालयनिर्माणं भवति स्म। क्वचित् क्वचिद् देवपदं पिशाचपदं गन्धर्वपदम् ऋषिपदमेषां लक्षणञ्चावलोक्य भिन्नप्रकाराणां देवालयानां स्थापनं भवति स्म। मानसारग्रन्थानुसारेण देवालयनिर्माणार्थं वृत्ताकृतिः, त्रिशूलाकृतिः, मत्स्याकारं वा स्थानम्, हस्तिपृष्ठसदृशं वा स्थानं विलोक्य देवालयस्थापना क्रियते स्म। इयमेव भूमिरुत्कृष्टा आसीत्। मानसारोपरि पी० के० आचार्यमहोदयानां शोधकार्यं वर्तते। अस्मिन् विषये तेन सम्यग् विस्तृतं च विचारितम्।

विष्णुधर्मोत्तरपुराणे विष्णुमन्दिराणां निर्माणस्य विशिष्टा विधयो वर्णिताः सन्ति। अंशुमद्भेदागमे सुप्रभभेदागमे, विश्वकर्मशिल्पे, काश्यपशिल्पे, एवमन्येषु सप्तदशपुराणेषु श्रीशिवस्य विष्णोश्च प्रतिमानामादरं समवलोक्यते। भविष्यत्पुराणे सूर्यमन्दिराणां विशेषेण वर्णनमवलोक्यते। अस्यानुसारं मन्दिरस्य द्वारं पूर्वाभिमुखं भवेत्। व्यतिरिक्तायां पश्चिमाभिमुखोऽपि भवितुमर्हति। प्रायेण समधिकमन्दिराणां द्वारं पश्चिमाभिमुखमेव वर्तते। दर्शनकांक्षिणस्तदा पूर्वाभिमुखा भूत्वा दर्शनादिकं कुर्वन्ति। यतः सूर्योदयं पूर्वस्यामेव दिशि जायते, अतोऽग्निहोत्रं भवनस्योत्तरदिश्येव भवितुमर्हति। यदि तस्मिन्नेव भवने शिवविष्णोः प्रतिमयोः स्थापना कर्तुं कामयते, तदा तौ सूर्यस्य उत्तरे पूर्वे पश्चिमे वा स्थापनीयौ। सूर्यस्य राज्ञी निक्षुभा निर्दिष्टा। सा सूर्यस्य दक्षिणपार्श्वे स्थापनीया। संज्ञा च वामपार्श्वे, पिङ्गलको दक्षिणदिशायां दण्डनायकश्च वामे स्थापनीयः स्यात्। श्रीः, महाश्वेता च सूर्यस्य समक्षे स्थापनीये। सूर्यमन्दिरे माठरः, कुबेरः, रेवन्तः, विनायकः, अश्विनीकुमाराश्च स्थापिता भवन्ति। मुख्यमन्दिरस्य अग्रभागे मण्डपद्वयं भवेत्। यत्र सामान्यजनाः समागत्यार्घ्यादिकं कर्तुं पार्यते। सूर्योदयस्य पश्चाद् दक्षिणेन मण्डपेन, सूर्यास्तस्य पश्चाद् वामगतेन मण्डपेन अर्घ्यदानादिकं भवेत्। सूर्यस्य समक्षे दिण्डिनः प्रतिमाऽपि स्थापनीया। मन्दिरस्य पुरः पुराणवाचनालयं भवेत्। आगमानुसारेण सूर्यमन्दिरात् सर्वे ग्रहा अवलोकनीयाः स्युः। पूर्वदिशि दर्शनेन विशेषलाभो भवति।

सूर्यं सिंहासनोपरि स्थाप्य वर्तुलाकारेण पुष्पादीनां वस्त्राभरणादीनां च सम्यक् शय्या करणीया। तस्य पार्श्वे विविधवर्णानां ध्वजपताकादीनामुत्तोलनं भवेत्। सूर्यस्य रथे एकं चक्रम्, सप्तघोटकाः संलग्ना भवेयुः। सूर्यस्य सारथिः अरुणस्तस्य रथाग्रभागे स्थितो भवेत्। स अनूरुरूपेण स्थापितो भवेत्। तुलसीदासेनाप्येतस्मिन्विषये सम्यग् रूपेणोल्लिखितम्। यथा—

**सारथि पंगु दिव्य रथ गामी।**
**हरिशंकर विधि मूरति स्वामी॥**

केषाञ्चिदागमानुसारेण सूर्यो ब्राह्मणवर्णो निर्दिष्टः। अन्येषां च मते क्षत्रियरूपः। मत्स्यपुराणे सूर्यः सिंहासनोपरि स्थिते सहस्रदलकमले निरूपितः। अन्वेष्वागमेषु स करयोः पुष्पं शङ्खं चक्रं च नीयमानो ध्यातव्यः। तस्य वर्णं तप्तं हिरण्यसदृशं तेजोमयं दिव्यहारयुक्तं च कथितं वर्तते[1]। तस्य ध्वजोपरि सिंहाकृतिरङ्किता वर्तते। स च निरन्तरं सुमेरुगिरेः परिक्रमायां

---

१. हारीहिरण्मयवपुर्धृतशङ्खचक्रः। (गरुडपुराणम्)

संलग्नोऽस्ति। स सर्वेषां ग्रहाणां राजा, स्थावरजङ्गमात्मकविश्वस्यात्मा कथितः[1]। वेदेषु स एव नारायणरूपेण कथितः[2]। स प्रातःकाले ब्रह्मा, मध्याह्ने महेश्वरः, सायंकाले विष्णुरिति रूपत्रयेणाराधितो भवेत्। एवंप्रकारेण भगवान् सूर्यस्त्रयीमयो त्रिमूर्तिरूपात्मकश्च भूत्वा विश्वस्य सर्वोपरि देवता प्रत्यक्षरूपेणावलोक्यते[3]।

स क्वचित् क्वचिद् द्वादशात्मरूपेण विश्वात्मरूपेण च वर्णितः। एवमेवान्यत्र सूर्यस्य द्वात्रिंशत्प्रकाराणामपि वर्णनमवलोक्यते। सूर्यमन्दिरे गरुडोऽपि स्थापितो भवितुमर्हति, सहैव केशवः, शिवः, यमः, धर्मः, पिङ्गलः, शनिः स्थापनीया भवेयुः। किन्तु नियतरूपेण चन्द्रः, इन्द्रः, वरुणः, कुबेरो बुधश्चान्यैर्ग्रहैः सह सूर्यमन्दिरे स्थापिता भवन्ति। एतदतिरिक्तं सूर्यस्य माता विनता, पिता कश्यपश्च मन्दिरे स्थापितौ भवेताम्।

मार्कण्डेयपुराणानुसारेण सूर्यस्त्रिदेवमयः कथितः। सूर्यस्य पूजा गुर्जरप्रान्ते पुरा विशेषरूपेण प्रचलिताऽऽसीत्। इयं परम्परा चतुर्दशशतकख्रीष्टाब्दं यावत् प्रचलिताऽऽसीत्। सूर्यप्रतिमया साकं वासुदेवस्य अनन्तस्यापि च प्रतिमा स्थापिता भवति। ४५० तः ७५० ख्रीष्टाब्दं यावत् सूर्यस्य या प्रतिमा उपलभ्यते तया सह त्रयोदशपरिकराः सम्मिलिताः सन्ति। येषु सप्तमुखात्मको घोटकोऽस्ति। मथुरायामेका एतादृशी शोभना प्रतिमा प्राप्ता, यस्या घोटका अग्रपादावुत्थाय पृष्ठपादेषु स्थिताश्चित्रिताः सन्ति। एको घोटको मध्येऽग्रेसरः, उभयपार्श्ववर्तिनस्त्रयो घोटकाः स्थीयमानाश्चित्रिताः।

केचन सामान्यजनाः स्वल्पबुद्धयः पादच्छन्नां सूर्यप्रतिमां विलोक्य उपानहधारिणं सूर्यं ज्ञात्वा विभिन्ना लेखा लिखितवन्तः; किन्तु शिल्पशास्त्राणां धर्मशास्त्राणाम् अवलोकनेन प्रतिभाति यद् नास्ति एतादृशी क्वचित् सूर्याकृतिः। एवंप्रकारेण यदि सूर्यो वर्णितो भवेद् निबन्धेषु, तदा शिल्पिन उपासकाश्च महत्कष्टभाजो भवेयुः। मत्स्यपुराणे एकादशाध्यायेऽस्य विषयस्य चर्चा वर्तते[4]। अस्यैव पुराणस्य एकषष्ठ्यधिकशतद्वयाध्याये पुनरियं वार्ता उल्लिखिता वर्तते। वाराहपुराणे १३३), शुक्रनीतिसारे (४), अग्निपुराणे (४३।१०), काश्यपशिल्पे, शिल्परत्ने, विष्णुधर्मोत्तरे सूर्यप्रतिमालक्षणप्रसंगेऽस्यैव विषयस्योल्लेखो वर्तते। अतः पादच्छन्नां विलोक्य उपानहादिज्ञानं पूर्णतो भ्रान्तिरेव वर्तते।

समधिकाः पाश्चात्त्या विद्वांसोऽपि भ्रान्तचेतसा सूर्यस्य पादे उपानहादिकं स्वनिबंधेषु चित्रितवन्तः। यथा तैरुल्लिखितम्—'दि सन गॉड वियर्स नार्दर्न ड्रेस कान्सिस्टिंग ऑव बटन

---

१. सूर्य आत्मा जगतस्तस्थुषश्च। (शुक्लयजुर्वेदः) वाजसनेयिसंहिता–७।४२, १३।४६; ऋक्संग्रहः, अथर्ववेदः, मैत्रायणीसंहिता।

२. धेयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः॥ (गरुडपुराणम्)

३. त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने।

४. ततश्च धर्मकामार्थी चित्रे स्वायतनेषु च।
न क्वचित् कारयेत् पादौ देवदेवस्य धीमतः॥ (मत्स्यपुराणम्–११। ३२)

कोट प्राउजर्स एण्ड पैंडेड बुड्स ।' एतस्मिन् विषये 'त्रिपथगा' इति परिपत्पत्रिकायामेवमन्य-प्रान्तीयशोधपत्रिकायामपि भ्रान्तिभाविता निबन्धाः प्रकाशिताः ।

येषां निबन्धानाम् १९५८ खीष्टाब्दे 'आज' इति दैनिकपत्रे विस्तारेण खण्डनं प्रकाशितमभवत् । सूर्यस्य रथोपरि सारथिः, अरुणः, उषा, प्रद्योतउषा धर्मोत्तरपुराणानुसारेण निक्षुभाप्रभृतयः स्त्रियश्चित्रिता भवन्ति । तत्पश्चाद् नागानामपि चित्रणं भवति । अहिच्छत्रे (रामनगरे) एका प्रतिमा प्राप्ता यस्यां प्रतिमायाः कलापूर्णं विकासं परिलक्षितं भवति । कुषाण-राज्ञां समकालीनाः प्रतिमा उपविश्यमानाश्चित्रिताः सन्ति । विष्णोः प्रतिमा योगमूर्तिरूपात्मिका । एवमेव बहुप्रकारात्मिका स्थानकमूर्तिरूपात्मिका अवलोक्यते । शेषे शयाना, उत्थिता, योगासने उपविष्टा, वामपार्श्ववर्तिनी, दक्षिणपार्श्ववर्तिनी च प्रतिमा प्राप्ता, किंतु नास्ति एवंविधा बहु-प्रकारात्मिका प्रतिमा सूर्यस्य । मथुरायां, गुप्तकालीनैका प्रतिमा प्राप्ता सा खीष्टाब्दस्य चतुर्थ-शतकस्य निर्णीता । अनया प्रतिमया साकं दण्डपिंगलौ उत्थितौ चित्रितौ । कियन्तः शोभनाः प्रतिमाः काबुलप्रान्ते अफगानिस्ताने चोपलब्धाः सन्ति । भविष्यत्पुराणेऽपि एषां विषयाणां वर्तते वर्णनम् ।

सूर्यप्रतिमातिरिक्तमस्मिन्नन्यस्थलेषु मन्दिराणां वर्णनं विलोक्यते । विश्वकर्मशास्त्रे एतस्याधिकं चित्रणं दृश्यते । 'विश्वकर्माशिल्पम्' दाक्षिणभारतः प्रकाशितम् । भविष्यत्पुराणे सूर्यप्रतिमानिर्माणं सप्तभिर्वस्तुभिर्भवितुमर्हतीति कथितं वर्तते । काष्ठनिर्मिता प्रतिमा धनायुषी वर्धिनी, मृण्मयी प्रतिमा ऐहिकपारलौकिकसुखकारिणी, रत्नादिभिः समृद्धिकारिणी, सुवर्णनिर्मिता प्रतिमा शक्तिदायिनी, रजतनिर्मिता प्रतिमा यशोदायिनी, ताम्रमयी प्रतिमा सन्तानवृद्धिकारिणी । एवं प्रस्तरमयीप्रतिमा भूसम्पत्तिदायिनी भवति[1] ।

शुक्लानुसारेण सूर्यस्य सुवर्णमयी प्रतिमा स्वास्थ्यम्, रजतप्रतिमा यशः, ताम्रप्रतिमा सन्तानम्, प्रस्तरप्रतिमा विजयम्, काष्ठमयी प्रतिमा आयुः, लेख्या लेप्या च सम्पत्तिदायिनी भवति । भविष्यत्पुराणानुसारं वार्क्षिकप्रतिमायाः कृते मधुपस्य, देवदारोः, चन्दनस्य, बिल्वस्य, श्रीपर्णस्य, अर्जुनस्य, सरलस्य, खदिरस्य, निम्बस्य, पनसः, रक्तचन्दनस्य, आमलकस्य काष्ठं श्रेष्ठं भवति[2] । वृक्षाणां कर्त्तनपूर्वं तेषामर्चनं जातिशक्तिपरीक्षणञ्च भवति स्म । दूराद् वनादिदमानयते स्म । वाराहमिहिरेणापि बृहत्संहितायां विस्तृतमेतस्य वर्णनं कृतमष्टादशाध्याये ।

चतुरशीत्यंगुलीयप्रमाणात्मिका प्रतिमा श्रेष्ठा भवति । तत्र मुखविस्तारं द्वादशाङ्गुल-प्रमाणं नेत्रं च द्व्यंगुलप्रमाणम्, ललाटविस्तारं द्वात्रिंशदङ्गुलप्रमाणं भवति । पादाश्चाच्छादिता

---

१. अर्चा सप्तविधा प्रोक्ता भक्तानां शुभवृद्धये ।
काञ्चनी राजसी ताम्री पार्थिवी शैलजा स्मृता ॥
वार्क्षी चालेख्यका चेति मूर्तिस्थानानि सप्त वै ।
वार्क्षीविधानं ते वीर वर्णयिष्याम्यशेषतः ॥ (तत्रैव १।१३१।२–३)

२. मधूको देवदारुश्च वृक्षराजश्च चन्दनः ।
बिल्वश्चाम्रातकश्चैव खदिरोऽथाञ्जनस्तथा ॥ (तत्रैव १।१३१।१०)

भवन्ति, केवलं षडङ्गुलप्रमाणं द्रष्टुं शक्यते[१]। अस्मिन् विषये रावमहोदयेन, अग्रवालमहोदयेन च विस्तरेण लिखितवन्तौ। संक्षेपतः प्रतिमा मनुष्यप्रमाणात्मिका भवन्ति। मापविपरीतनिर्माणेन शिल्पिनो दुःखभाजो भवन्ति।

गुड्डीमलमस्थाने (मद्रासप्रान्ते) परशुरामेश्वरमन्दिरे एका सूर्यप्रतिमा प्राप्ता। इयं सप्तमशताब्द्यां रचिता इति मन्यते। पल्लवानां काले निर्मिता एका प्रतिमा मेलाचेर्याः शिवमन्दिरे स्थिताऽस्ति। धारवाड़ वेलूरे जूनागढ़े मद्रासे च संग्रहालयेष्वनेकाः सूर्यप्रतिमाः संरक्षिताः सन्ति। श्रीनिवासमहोदयानां 'ब्राञ्चेज आॅव साउथ इण्डिया' नाम्नि पुस्तकेऽस्य विषयस्य विस्तृतं वर्णनमवलोक्यते।

अहिक्षत्रे (रामनगरे) अपि विभिन्नशिल्पशास्त्रेषु भविष्यत्पुराणे च निर्दिष्टं विधिमनुसृत्य सर्वाङ्गसम्पन्ना सूर्यप्रतिमा अवलोकिता। कुषाणकाले सूर्यप्रतिमायां चत्वारो घोटकाः, द्वे नार्यौ नागानां सह सूर्यस्य प्रतिमा चोपलब्धाऽस्ति। खैरे, काँचे नगरे च ये अफगानिस्ताने कावुलपार्श्वे स्थिते चतुर्थशताब्द्याः सूर्यप्रतिमा तत्रैका प्राप्ता, यामपि पूर्वसदृशी वर्तते।

भविष्यत्पुराणे विंशतिप्रकाराणां देवमन्दिराणामुल्लेखोऽस्ति। एस्टेलाक्रैमरिसमहाभागानां 'हिन्दू टेम्पुल' ग्रन्थेऽपि भविष्यत्पुराणस्य शैल्या विस्तृतं वर्णनं विहितं वर्तते। तेन लिखितमस्ति यद् भविष्यत्पुराणस्य मन्दिरनिर्माणशैली अतीव आकर्षिणी प्रभावशालिनी च वर्तते। भूशक्तिपरीक्षणम्, परिमाणनिर्देशनं मन्दिरनिर्माणादिविधिप्रतिमाप्राणप्रतिष्ठाविधिः। एवमेव विधयस्तत्र विस्तारेण वर्णिताः। यद्यपि इमाः सर्वविधाः प्रतिमाः, एतानि मन्दिराणि च नैवोपलभ्यन्ते। इदं प्रकरणं विश्वकर्मणोल्लिखितम्[२]। अन्यान्यपि विश्वकर्मशिल्पशास्त्राणि एतत्सदृशान्येव प्रतिभान्ति।

बृहत्संहितायामप्यस्य विषयस्य चर्चा वर्तते। बृहत्संहितायाः प्रशंसा पाश्चात्त्यविद्वद्भिरपि मुक्तकण्ठेन कृता। अस्या अनेके संस्करणा अद्यावधि प्रकाशिताः सन्ति। मोनियरविलियममहोदयेन स्वकोशग्रन्थे प्रायः सर्वेषां महत्त्वपूर्णशब्दानां संख्यानिर्देशपुरस्सरमुल्लेखः कृतः। 'इण्डियन विजडम' नाम्नो ग्रन्थस्य १८५-८९ पृष्ठेष्वेतस्य महती प्रशंसा कृता वर्तते।

डॉ० कर्णमहोदयनाम् अनुवादेऽपि भट्टोत्पलीटीकायाः पूर्णभावं तु वर्तत एव, तुलनात्मकमध्ययनेन सह शब्दानां सूचिरपि निर्मिता वर्तते। विजयनगरस्य, सम्पूर्णानन्दसंस्कृतविश्व-

१. अङ्गुलैश्च तथा मूर्तिश्चतुरशीतिसंमितैः।
विस्तारायामतः कार्या वदनं द्वादशांगुलम्॥
नयनेऽध्यंगुले स्यातां त्रिभागा तारका भवेत्।
तृतीयतारकाभागात् कुर्याद् दृष्टिं विचक्षणः॥
ललाटमस्तकोत्सेधं कुर्यात्तत्सममेव च।
परिणाहस्तु शिरसो भवेद्द्वाविंशदंगुलः॥
गुल्फाधस्तात्तु पादः स्यादुच्छ्रितश्चतुरंगुलः।
षडंगुलसुविस्तारस्तस्यांगुष्ठांगुलत्रयम् ॥ (तत्रैव, १।१३२।७–१३)

२. सहस्रत्रितयं चैव कथितं विश्वकर्मणा।
प्राहुः स्थापयतश्चात्र मतमेकं विपश्चितः॥ (तत्रैव, १।१३०।३६)

विद्यालयस्य च संस्करणमपि श्रेष्ठतरं प्रतिभास्येते। पाश्चात्त्यविदुषामनुमितिरियं वर्तते यद् बृहत्संहितायाः प्रभावो भविष्यत्पुराणोपरि दृश्यते[1], किन्तु नास्ति शोभनेयमुक्तिः, यतो वराहमिहिरेण स्पष्टरूपेण प्राचीनग्रन्थानामुद्धरणेन सह स्मृतिपुराणानामपि महिमा गीता[2]। तेन भविष्यत्पुराणस्य सम्यगध्ययनं कृतम्।

पार्जीटरमहोदयानुसारेण भविष्यत्पुराणमन्यपुराणापेक्षया पूर्वमेव रचितम्। अयं विषयो मया पूर्वमपि कतिवारमुल्लिखितो वर्तते। रावमहोदयेन, एस्टेलाक्रैमरिसमहोदयेन भविष्यत्पुराणस्य प्रतिमानिर्माणकलायां पाश्चात्त्यप्रभावोऽपि मन्यते। अरोरामहोदयानुसारेणाभ्यङ्गधारणं पाश्चात्त्यसंस्कृतेश्चिह्नमस्ति। किन्तु यज्ञोपवीतं कर्णवेधः कुण्डलधारणम् अभ्यङ्गधारणं च भारते अतिप्राचीनकालादेव प्रचलितमासीत्। गोत्रप्रवर्तका ऋषयोऽपि भारतवासिन आसन्। गौतमेनापि अष्टचत्वारिंशत्संस्काराणामुल्लेखः कृतः। भविष्यत्पुराणस्य निर्माणकर्ताऽपि भारतवासी एवासीत्। अभ्यङ्गशब्दोऽपि संस्कृतभाषाया एव शब्दोऽस्ति। अयं शब्दो मेखलार्थेऽपि प्रयुज्यते। अतोऽस्योपरि बाह्यप्रभावः केनापि प्रकारेण मन्तुं न शक्यते। एतेन बुद्धप्रकाशस्यापि मान्यताः परप्रत्यायिताः पूर्वानुग्रहग्रहीतास्तर्कहीना विपरीताश्च संलक्ष्यन्ते। अत्र विशेषजिज्ञासूनां कृते सूत्रधारमण्डनम्, रूपमण्डनम् अंशुमद्भेदागमादयो ग्रन्थाः प्रमाणभूता भवितुमर्हन्ति, येषां प्राचीनताया विषयेऽपि नास्ति काचिद् विचिकित्सा।

**गणेशस्य स्थितिः**

गणाधिपो गणेशो हिन्दूनां प्रमुखदेवतारूपेण विद्यमानः। सम्पूर्णे हि भारतवर्षेऽस्य मन्दिराण्युपलभ्यन्ते। महाराष्ट्रे बहूनि मन्दिराणि सन्ति गणेशस्य। तस्य शिरोपरिभागः हस्तिनो वर्तते। उदरं वृकसदृशं विशालमपि वर्तते। एतदर्थमेवायं लम्बोदरवृकोदरगजाननादिनाम्ना प्रसिद्धः। अस्य वाहनो मूषको वर्तते।

ऋग्वेदे[3] गणपतिशब्दो गणानां स्वामित्वरूपेणापि प्रयुज्यमानोऽवलोक्यते। केचन जना अयं शब्दो बृहस्तेरपरपर्याय इत्यपि मन्यन्ते। तैतिरीयारण्यके (१०।१) 'गणेशगायत्र्याः' उल्लेखो वर्तते। तस्मिन् प्रकरणेऽस्य सुण्डस्य गजदन्तस्यापि वर्णनं वर्तते। मन्त्रस्यान्तेऽपि **'तन्नो दन्तिः प्रचोदयात्'** इति पुनरुक्तिरूपेणावलोक्यते[4]। अत्र कराटशब्दः सुण्डार्थे दन्तं च गजदन्तार्थे प्रयुक्तः। ऐतरेयब्राह्मणेऽपि गणेशस्योल्लेखः स्पष्टरूपेणावलोक्यते[5]। मीयरनामकेन विदुषा इदं निश्चयं कृतवान् यद् गौरीगणेशस्येयं पूजा मातृशक्त्या जनशक्त्या च सम्बद्धा आसीत्। ग्रियर्सनक्रुकमहोदयानां विश्वासो वर्तते यद् गणेशः कश्चिद् द्रविडजात्यां जायमानो वीरपुरुष आसीत्।

---

१. द्र०, H. C D. B. P. 203.

२. द्रष्टव्यं स्त्रीप्रशंसाप्रकरणे। ३. ऋग्वेदे, २।२३।१।

३. द्र० एकदन्ताय विद्महे महाकराटाय धीमहि।
तन्नो दन्तिः प्रचोदयात्। (तैत्ति० आ०, १०।१)

४. द्र० ऐतरेयब्राह्म० १।२१।

आनन्दकुमारस्वामीमहोदयानुसारेण गणेशः कश्चिद् यक्ष आसीत् । एलिसगेटीमहाभागया गणेशमधिकृत्य एकं पुस्तकं रचितम् । इदं पुस्तकं पूर्णतोऽनुसन्धानात्मकं वर्तते । अस्यानुसन्धानप्रक्रिया शोभना वर्तते । तया तत्र प्रो० फाउचरमहोदयानां मतस्योल्लेखः कृतः । तस्मिन् पुस्तके तेन गणेशस्यार्धभागो मनुष्यरूपेण, अन्यार्धभागो हस्तिरूपेण मिश्रितोऽवलोकितः[१] । तथापि एलिसगेटीमहाभागया अस्य खण्डनं कुर्वत्या कथितं यद् हिन्दुशास्त्रानुसारेण विशेषेण गणेशपुराणे मुद्गलपुराणे ब्रह्मवैवर्तपुराणे भविष्यत्पुराणे च गणेशः साक्षाद् ब्रह्मस्वरूपेण चित्रितः । गणेशस्तु वैष्णवैः शिवमतावलम्बिभिरसुरैर्विशेषेणाराधितः । विघ्नविघातकरूपेण तु सर्वैरयमाराध्यते[२] ।

भविष्यत्पुराणानुसारेण गणेशस्योत्पत्तिः किञ्चिन्मतान्तरेण प्रस्थापिताः । अत्र लिखितो वर्तते पूर्वं देवानां दानवानां मनुष्याणां च कार्यं निर्विघ्नेन परिसमाप्तं भवति स्म । किन्तु पश्चात्काले अहंकारग्रस्तमानसा जना अभूवन् । तर्हि तेषां कार्येषु विघ्नः प्रविष्टः । अस्यां परिस्थितौ ब्रह्मणा गणेश उत्पादितः । स च विघ्नविघातकः । तत्पूजया विघ्नं विनष्टं भवति स्म[३] । सम्पूर्णानन्द-भण्डारकरप्रभृतयः पाश्चात्यमतपोषका विद्वांसो गणेशमनार्यदेवं मन्यन्ते, परन्तु नेदं शोभनं मतम्, यतो वेदेषु पुराणेष्वपि चैतादृशो नास्ति कश्चिन्निर्देशः । अत्र त्वयम् आदिदेवसंज्ञया विभूषितः । वाराहपुराणेऽयं शिवपुत्ररूपेणोद्घोषितः । अत्र मुख्यविनायक-गणाधिपेत्याद्यो गणेशस्य प्रशंसावाचकाः शब्दाः प्रयुक्ताः सन्ति । भविष्यत्पुराणानुसारेण (१।२३।६-११) विनायकेन गृहीतव्यक्तेरनेकलक्षणानि कथितानि सन्ति । यथा—तैलस्नानम्, नग्नपुरुषदर्शनम्, केनापि पलायमानः, राजपुत्राणां कृते राज्यप्राप्तौ बाधा, विद्यार्थिनां स्मृतिशक्तेर्लोपश्च, अध्यापकानामध्यापनम्, कृषकाणां कृषिकार्यम्, एवं वणिजां व्यापार इत्यत्र समुपस्थिता बाधाऽपि विनायकग्रहस्यैव लक्षणं प्रकटितम्[४] । गणपतिशान्त्या एतादृशव्यक्तीनां कल्याणं भवति ।

---

१. द्र०, दि प्रावलम ऑव गणेशाज ओरिजिन् इन् दि पुराणाज, जुआन राजररीभर्स, पुराण-बुलेटिन, जनवरी १९६२, पृ० १०२ ।

२. एलिसगेटी, गणेश, इन्ट्रोडक्शन, पृ० २०, १९६६ ।

३. शृणुष्वैकमना राजन् कथयाम्येष शान्तिदम् ।
पूर्वमेकार्णवे घोरे नष्टे स्थावरजंगमे ॥
स्वयंभूरभवद्देवः सुरज्येष्ठश्चतुर्मुखः ।
ससर्ज लोकान् देवांश्च भूतानि विविधानि च ॥ (तत्रैव, १।१७।२-३)

४. विनायकः समृद्ध्यर्थं प्रजानां विनियोजितः ।
गणानां चाधिपत्ये च भीमः ·········सात्वतैः ।
ततोपसृष्टो यस्तस्य लक्षणानि निबोध मे ॥
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ।
काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ।
व्रजमानस्तथात्मानं मन्यतेऽनुगतं परैः ॥
विमना विफलारम्भः संसीदत्यनिमित्ततः ।
करटारूढमात्मानमंभसोऽन्तरङ्गं तथा ॥—(तत्रैव, १।२३।५–३१)

भविष्यत्पुराणस्येदं प्रकरणम् (१।२३।५-३१), याज्ञवल्क्यस्मृतौ (१।२६६-९४), अग्निपुराणे (२६६।१-२०), नारदपुराणस्य पूर्वभागे (५१।५८-८१) तथा बृहत्पराशरस्मृतौ (११।१-२५), मानवगृह्यसूत्रेऽपि च (२।१४) आनुपूर्वीरूपेण प्राप्यते। मात्रपञ्चमे श्लोके कर्मविघ्नसिद्ध्यर्थमित्यस्य पदस्य स्थाने समृद्ध्यर्थमिति भ्रान्त्या लिखितं वर्तते। याज्ञवल्क्यस्मृतौ विश्वरूपस्य बालक्रीडा, विज्ञानेश्वरस्य मिताक्षरा, लक्ष्मीदेवपायगुण्डेमहोदयस्य बालमभट्टी, शूलपाणेः दीपकलिका, सुबोधिनी अपरार्कप्रभृतयो विंशतिसंस्कृतभाष्याण्युपलब्धानि सन्ति। अनेनैव प्रकारेण रोऊर–स्टेंजलर–जे० आर० घारपुर–हाटन–मोनियर–श्रीनाथ–राधाउर्वसु–बनर्जी-मुल्लाप्रभृतय आङ्ग्लभाषाकोविदाः सन्ति। अस्योपरि टोडरानन्ददायतत्त्वविवादार्णवसेतु–मदनपारिजात–विवादरत्नाकर-व्यवहारमयूख-विवादचिन्तामणि–सरस्वतीविलास–व्यवहारमातृका-प्रभृति निबन्धानामपि प्रकाशनं सञ्जातम्। एतदतिरिक्तं कुलमणेः, देवबोधस्य, शूलपाणेः, धर्मेश्वरस्य, रघुनाथभट्टस्य वीरमिश्रस्य च चित्रविचित्रा निबन्धा अमुमाधारीकृत्य प्रकाशिताः।

यद्यप्यनुसन्धानकर्तॄणां कृते एतानि वस्तून्युपलब्धानि सन्ति; किन्तु इदं कठिनं वर्तते यदेतेषां किं मूलम्? पार्जीटरमहोदयस्तु भविष्यत्पुराणम्, अन्ये मानवगृह्यसूत्रम्, केचन च याज्ञवल्क्यमेव प्रथमस्थानीयं मन्यन्ते। विनायकस्य चर्चा वेदे वाल्मीकिरामायणे च प्राप्यते। अतो वेदकालादेवास्य पूजा प्रचलितेत्यत्र नास्ति शङ्का। भारतीयज्योतिषग्रन्थे आर्यसमाज-संस्थायाः विद्वांसोऽपि अत्र मतैक्या अवलोक्यन्ते। यतः सामविधानब्राह्मणे षड्विंशब्राह्मणे च शान्तिप्रकरणे गणेशस्योल्लेखो वर्तते। एतेषु शान्तिविधानेषु मुख्यतया विनायकस्नानम्, पुष्प-चन्दनादिभिः पूजनम्, ब्राह्मणदानं भोजनसम्मानादिभिः सत्कारं मुख्यरूपेण कथितम्। भविष्यत्पुराणे (१।२३।६-३१) तथा पूर्वनिर्दिष्टेषु स्थलेष्वपि शान्तिविधौ प्रयुज्यमानानि वेदमन्त्राणि शान्तिकल्पे संगृहीतानि सन्ति। अत्र पावमानी ऋचो विशेषभाष्यमवलोक्यते। एतस्य वर्णनं ऋक्परिशिष्टे प्राप्यते। 'आपस्त्वां पुनन्तु' इत्यादिभिरारभ्य परमपवित्रकारकेण जलेनैव पवित्रीकरणं भवति।

**ब्रह्मणः स्थितिः**

त्रिमूर्तौ ब्रह्मणो नाम प्रथममेव प्राप्यते। अयं विश्वस्रष्टा अस्ति। भविष्यत्पुराणे (१।१७।४२) अस्य महत्ता सृष्टिकाररूपेण च वर्णिता। अस्यानुसारेण ब्रह्मणः प्रार्थनापेक्षया तपसा दानेन यज्ञेन च स्वल्पं पुण्यं प्राप्यते। ब्रह्मणः सदृशो नास्ति कश्चिदन्यो देवः, न वा आचार्यः, न वा शिक्षकः। तथा हि कथितम्[1]। चत्वारो वेदा तस्य मुखात् प्रादुर्भूताः, सरस्वती च तस्य पत्नी। इयं च सरस्वती विद्याया ज्ञानस्य बुद्धेर्वा अधिष्ठात्री देवी अस्ति।

डी० एन्० शुक्लमहोदयानुसारेण पूर्वं भारतवर्षे ब्रह्मसम्प्रदायः प्रचलित आसीत्। 'हिन्दू कैनान्स आइकोनोग्राफी' पुस्तकस्य द्वितीयभागे इदमुल्लिखितमस्ति। वराहमिहिरोऽपि बृहत्संहितायाः अष्टपञ्चाशदध्याये ब्रह्मणः पूजाया उपरि समानरूपेण बलं दत्तम्। वैदिकेषु

---

१. नास्ति ब्रह्मसमो देवो नास्ति ब्रह्मसमो गुरुः।
नास्ति ब्रह्मसमं ज्ञानं नास्ति वेधः समं तपः॥—(तत्रैव, १।१७।४२)

अस्या अर्चाया विशेषाग्रहोऽपि दृश्यते। अस्य प्रतिमायां चत्वारो मुखाः, अष्टौ कराः, करे वेदपुस्तकं कमण्डलुः, कमलोपरि विराजमानं च पद्मासनरूपेण उपविश्यमानं ब्रह्मणः स्वरूपम् अवलोक्यते। भविष्यत्पुराणेऽपि प्रायोऽनेनैव प्रकारेणास्य विषयस्य चर्चा वर्तते। भविष्यत्पुराणे (१।१७।१८) कथितं वर्तते यद् ब्रह्मणो मन्दिरस्य निर्माणकर्ता ब्रह्मलोकं प्राप्नोति। ब्रह्मणो मन्दिरस्य मार्जनकर्तारः समधिकं पुण्यं लभन्ते।

अनेकानि कारणानि सन्ति ब्रह्मणः सम्प्रदायविनाशस्य। पद्मपुराणे इमं विषयमधिकृत्य अनेकाः कथा रचिताः। इदानीमस्य मूर्तिः अजमेरस्य पुष्करक्षेत्रे उपलभ्यते। पुस्करस्तीर्थानां गुरुः कथ्यते। अन्यपुराणेषूपनिषत्सु च ब्रह्मणश्चर्चा स्वल्पमेव वर्तते। हरमनजैकोबीमहोदयेन 'इन साइक्लोपीडिया आँव रिलीजियस इथिक्स' नामके ग्रन्थे ब्रह्मणीज्मनामके निबन्धे अस्य विषयस्य प्रकाशनं कृतम्। एवं ज्ञायते यद् विष्णुभक्तेः प्रचारमेव ब्रह्मपूजनपरम्परां परिसीमितां कृतवती। भागवते विष्णुपुराणे मत्स्यपुराणे चायं स्वल्परूपेण चर्चितः। शिल्पग्रन्थेषु, आगमग्रन्थेष्वपि तथैव ब्रह्मणः पूजाया उपेक्षा प्रदर्शिताः। पद्मपुराणानुसारेणास्य पत्नी सरस्वती एव सावित्रीनाम्न्या आभीरकन्यया साकं विवाहकरणेनास्य पूजां विश्वे निषिद्धां कृतवती। एकमात्रे पुष्करे चास्य पूजायाः विधानं कृतम्। सम्यगनुशीलनाभावे अरोरामहोदयेनास्योपरि भ्रान्तिपूर्णं विचारं प्रदर्शितवान्। पुराणावलोकनेनैतस्य परिमार्जनं भवितुमर्हति। विशेषेण पद्मपुराणे (१–८०) सृष्टिखण्डे अस्य चर्चा वर्तते।

**देवेषु अग्नेः स्थानम्**

भविष्यत्पुराणे अग्निपूजाऽपि स्वल्पेन चर्चिता वर्तते। यद्यपि ऋग्वेदस्य प्रारम्भः **'अग्निमीले पुरोहितम्'**[1] इत्यादिकेनाग्निसूक्तेनैव भवति। ऐतरेयब्राह्मणेऽपि प्रारम्भादेव **'अग्निर्वै देवानां प्रथमः'**[2] इत्यभिधाय अग्निः सर्वोपरि मन्यते। अतः प्रतीयते यद् अग्नेरुपासना सभ्यतायाः प्राचीनकालादेवास्ति। यथा हिन्दुशास्त्रे अग्नेः प्राथम्यं तथैव पारसिकप्राचीनावेस्तादिधर्मग्रन्थेष्वपि अग्नेर्महत्त्वं मन्यते।

अनेन प्रकारेणावलोक्यते यत् संस्कृतसाहित्यस्य प्राचीनेष्वर्वाचीनेषु च ग्रन्थेषु विभिन्नदेवानां पूजनम्, प्रतिमायाः संस्थापनमित्यादिदैवसम्बन्धिविषयाणां यथा चर्चाऽवलोक्यते, तथैव भविष्यत्पुराणेऽपीदं विषयं सम्यक्तया बहुधा चर्चितं वर्तते। भविष्यत्पुराणे सूर्यदेवस्य पूजाविधिः प्रतिमानिर्माणविधिश्च विशेषतया उपवर्णिता। इदमेवास्य पुराणस्यान्येभ्यो वैशिष्ट्यं संलक्ष्यते।

● ● ●

१. ऋग्वेदस्याग्निसूक्ते १।१।१। २. ऐतरेयब्राह्म० १।१।

लघुग्रन्थमाला

[ ३४ ]

म० म० सुधाकरद्विवेदिप्रणीतं

# भाभ्रमरेखानिरूपणम्




सम्पादकः

विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी

उपाचार्यो ज्योतिषविभागाध्यक्षश्च

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३८

# प्रास्ताविकम्

ज्योतिषपरीक्षासु विनिर्धारितलघुपाठ्यग्रन्थानामयं भाभ्रमरेखानिरूपणाख्यो द्वितीयो ग्रन्थो विलसति, यः खलु लघुग्रन्थमालायाश्चतुस्त्रिंशपुष्पतया प्रकाशमानीयते। आधुनिकज्योतिर्विज्ञानपरिचयः प्राचीनग्रन्थरचनाप्रणाल्या संस्कृतच्छात्राणां सुखं स्यादिति धिया प्राच्यप्रतीच्योभयविद्यावद्भिः श्रीमद्भिर्महामहोपाध्यायसुधाकरद्विवेदि-महोदयैर्दीर्घवृत्तलक्षणप्रणयनोत्तरमतिपरवलयपरवलयक्षेत्रबोधाय मुख्यतः प्रणीतमास्ते ग्रन्थरत्नमिदम्।

कल्पसूत्रेषु प्ररूढबीजश्छायाभ्रमणविषयको विचारः सिद्धान्तज्योतिषग्रन्थेषु ब्रह्मगुप्तश्रीपतिवटेश्वरभास्कराचार्यादिभिः क्रमशः पल्लवितः। वृत्ते छायाभ्रमणस्य दोषो वटेश्वरेण निरूपितः। छायाभ्रमणस्य सिद्धान्तोऽग्रमरबिकभाषायां ब्रह्मगुप्त-सिद्धान्तस्यानुवादेन सार्धमरबदेशीयैरवगतः। ततो यूरपदेशीयैः सह यवनदेशीयैर्विज्ञात एष शङ्कुच्छिन्नतया (Conic Section) अग्रेसारितः। शङ्कुच्छिन्नक्षेत्राणामुपयोग-स्यातीव चमत्कारकमिदं लघुपुस्तकं विराजते। शङ्कुच्छिन्नवक्रेष्वेव भाभ्रमपथोऽङ्कयितुं शक्यत इति समसाधि द्विवेदिमहोदयैर्दिङ्मीमांसानामके ग्रन्थे।

महामहोपाध्यायानामात्मजेन वाराणसेयराजकीयसंस्कृतमहाविद्यालये ज्योतिष-शास्त्राध्यापकेन श्रीपद्माकरद्विवेदिना सम्पादितमेतस्य द्वितीयं संस्करणं १९३२ तमे ख्रीस्ताब्दे प्रकाशमुपगतम्। तत्र सम्पादकीयाष्टिप्पण्यो ग्रन्थाद् बहिः पादटिप्पणीत्वेन नाङ्किता इति ता ग्रन्थांशेषु न्यमज्जन्। यथा (ग्रन्थस्यास्यैकादशपृष्ठे)—'इत्यनेन पूज्यपादपितृकृतप्रतिभाबोधकग्रन्थस्थेन सूत्रेणच्छेदनक्षेत्रं वृत्तं भवति' इत्यंशः स्पष्टः। दीर्घवृत्तलक्षणमिह विषयावबोधाय महदुपकारकमिति महामहोपाध्यायैश्चतुरुद्धृतं तत्।

सिद्धान्तज्योतिषाचार्यपरीक्षानिर्द्धारितस्यास्य भाभ्रमरेखानिरूपणस्य मुद्रणा-तीतत्वं विभाव्य विश्वविद्यालयस्यास्य ज्योतिषविभागाध्यक्षेण डॉ० श्रीकृष्णचन्द्रद्विवेदिना विद्यार्थिनामुपकारधिया भूमिकाविषयानुक्रमणिकादिभिर्विभूष्य लघुपुस्तकमेतत् परि-श्रम्य सम्पादितम्। तस्यास्य प्रकाशनेन विद्वांसो जिज्ञासवो विद्यार्थिनश्च नूनं प्रीणिता उपकृताश्च भवेयुरिति प्रत्येति

वाराणस्याम्
माघपूर्णिमायां २०३७ वै०
( १८-२-८१ ख्री० बुधवासरे )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

महामहोपाध्यायपदवीसमलङ्कृतैः प्राच्यप्रतीच्यगणितविद्धौरेयैः श्रीसुधाकर-द्विवेदिभिर्निर्मितं भाभ्रमरेखानिरूपणनामकं लघुपुस्तकं शङ्कुच्छिन्न-(Cohic Seefeer) क्षेत्राणामुपयोगस्यातीव चमत्कृतिनिर्भरमुदाहरणम् । छायाभ्रमणविषये विचिकित्समानानां भारत-यूरोपदेशानां मनीषिणां संशयोच्छेदकरं पुस्तकमिदं द्विवेदि-महाभागानां स्वतन्त्रान्वेषणमवगाहते । शङ्कुच्छिन्नक्षेत्राणामाविष्कारको यावनज्योतिर्विद्''''पदावलम्बो 'अपोलोनियस' महोदयोऽपि विषयेऽस्मिन् दत्तावधान एव दृश्यते । छायाभ्रमणमालम्ब्य दिङ्निर्धारणपटवः शुल्वसूत्रनिर्मातारो विषयेऽस्मिन् दिग्दर्शनमकार्षुः ।

ततः प्रभृति सिद्धान्तज्यौतिषग्रन्थेषु सर्वत्र छायाबिन्दुत्रयगतपरिगतवृत्तमेव छायाभ्रमणपथस्येषा परम्परा लब्धावकाशा समजनि । सूर्यसिद्धान्तकारा आहुः—'त्रिस्पृक्सूत्रेण भाभ्रमः' ज्यौतिषसिद्धान्तविद्कविवरः श्रीपतिरुदैरयत्, यथा—

**मत्स्योदरद्वयगसूत्रयुतेश्च तस्या भात्रयस्पृगिति यद् भवतीह वृत्तम् ।**
**छाया न तत्परिधि मुञ्चति मध्यशङ्कोर्मध्यस्य भागमिव साधु गतिः कथञ्चित् ॥**

वाहनस्फुटसिद्धान्तस्य अरबीयभाषयाऽनुवादेन सह अरबदेशे प्रस्थितोऽयं विषयो यूरोपदेशेऽपि प्रावात्सीत् । शङ्कुच्छिन्नवक्रेषु समधिगतप्रावीण्या अपि यूरोपदेश्याश्छायाभ्रमणविषये नाध्यवास्यन् । सर्वप्रथमं वृत्ते छायाभ्रमणस्य दोषाविष्कर्त्ता वटेश्वर एव । ततो भास्कराचार्योऽपि वृत्ते छायाभ्रमणं समालोचयामास । यथा हि—

**भात्रितयाद् भाभ्रमणं न सदस्याद्दिक् पलाद्यं च[1] ॥**

'दिङ्मीमांसा' नामके स्वग्रन्थे द्विवेदिमहोदयैः समवाबोधि यच्छायाभ्रमणं वृत्ते न भवति, किन्तु शङ्कुच्छिन्नवक्रेष्वेव भाभ्रमपथोऽङ्कयितुं शक्यते ।

लघुग्रन्थेऽस्मिन् ग्रन्थकारेण प्रथमं शङ्कुच्छिन्नवक्राणां स्वरूपनिर्धारणपुरस्सरं भुजकोट्योः समुद्भवः किमाकारकं गणितविधिं समाश्रयत इति सम्यङ् निरदेशि ।

भूपृष्ठे शङ्कुच्छायापथाङ्कोपयोगिनामुपकरणानां समवधानं वस्तुतो गणितशेमुषीभाजां पुरतो द्विवेदिमहोदयानां वक्रक्षेत्रोपन्यासचमत्कृतिचञ्चुत्वमेव विशदयति । भूपृष्ठे पृथक् पृथगक्षांशवत्सु प्रदेशेषु प्रतिदिवसं भिद्यमानासु रविक्रान्तिसु छायापथः कथं निर्धारणीय इति विचिन्तयितुमनसा प्रथममहोरात्रवृत्तस्य शङ्कुशिखरगता सूची किंस्वरूपा स्यादिति विचारवीथीमधिरोहति । तत्र द्विवेदिमहोदयैः स्वल्पान्तरता

---

१. सिद्धान्तशिरोमणौ गोलाध्यायस्य यन्त्राध्याये ३८ तमः श्लोकः ।

भूकेन्द्रगतध्रुवयष्ट्यां भूकेन्द्रतोऽहोरात्रवृत्तकेन्द्रस्य क्रान्तिज्यागुणितभूव्यासार्द्धतुल्य-दूरत्वमिव नाडीवृत्तीयभूपृष्ठतोऽपि स्वीकृतम् । अहोरात्रवृत्तत्रिज्यां तु क्रान्तिकोटिज्या गुणितरविकर्ण एव । तथा कृते भूपृष्ठीयशङ्क्वग्रतोऽहोरात्रवृत्तस्य वृत्ताधारसमसूची-क्षेत्रत्वमेवोरीकृतं भवति । तेन शङ्क्वग्रगतरविकिरणैः समुत्पन्नाश्छायाकिरणा अहोरात्रवृत्तसूच्या विपरीतदिशि तत्सजातीयमेव सूचीक्षेत्रमुत्पादयन्ति । ततो वृत्ताधारा छायाकिरणसूची भूपृष्ठे प्रत्यक्षांशं भिन्नभिन्नपृष्ठीयक्षितिजधरातलेन छिन्ना चतुर्विध-शङ्कुच्छिन्नवक्राकृतिं भजते ।

ततः प्रत्येकाक्षांशीयभूपृष्ठे वक्रक्षेत्राणां शङ्कुमूलतो मध्याह्नछायाग्रं यावदन्तरं ज्ञात्वा वक्राणां समानसम्बन्धः 'इ' समाख्यपरिज्ञानं शङ्कुमूलतो वक्रनाभेर्दूरत्वावधारणं वक्राणां बृहदक्षस्य समवगाहनमित्यादयो विषया गणितार्णवमन्थकस्य म० म० द्विवेदिमहोदयस्यैव धिषणामधिरोढुं क्षमाः । इमानि सकलानि कुतूहलोत्पादकानि भूमितिगणितस्त्रोतांसि द्विवेदिमहोदयैर्महता कौशलेनाविष्कृत्य प्रेक्षावतां पुरत उप-न्यस्तानि । एषां साहाय्येन कोऽपि कस्मिन्नपि दिवसे कस्मिन्नप्यक्षांशे छायाभ्रमणपथो-पकरणभूतभुजकोट्योरानयनपुरस्सरं भविष्यनिर्देशं विधातुं प्रभवति[१] ।

छायापथमुट्टङ्कयितुं ग्रहगतिमिव छात्राणां छायाभ्रमणपथे रुचिमुत्पादयितुं ग्रन्थेऽस्मिन्नैके प्रश्नाः समावेशिताः सन्ति, तेषां समाधानार्थमत्र कानिचित् सूत्राणि निर्दिश्यन्ते ।

यत्र च

अक्षांशकोटिः ∠ रविक्रान्तिः

**तत्र छायापथस्य दीर्घवृत्तत्वम् ।** यदि अक्षांशकोटिः = ०, तत्र छायापथो वृत्तम् अहोरात्रसमान्तरधरातलेन छायासूचीछिन्ना, यत्र अक्षांशकोटिः = रविक्रान्तिः, तत्र छायापथस्य परवलयत्वम्—छायासूचीकर्णसमानान्तरधरातलेन छायासूचीच्छिन्ना ।

यत्र अक्षांशकोटिः ∠ रविक्रान्तिः, तत्र छायापथस्यातिपरवलयत्वम् । यत्र अक्षांशाः = ०, क्रान्तिः = ०, तत्र छायापथस्य सरलरेखारूपत्वम्, अहोरात्रवृत्ता-भिन्नधरातलेन छायासूचीछिन्ना ।

---

१. अत्र शङ्क्वग्रसूचीकोणमानं कियन्मितं भवितुमर्हतीति निर्देशो न व्यधायि । एतदर्थमिदं विभावनं पुरोऽवतिष्ठते यत् तस्य परममहत्त्वं परमलघुत्वञ्चावधार्यते । यदि रविरुत्तरा क्रान्तिः परमा स्यात्तदा ध्रुवोपरि तन्मानम्—

$$\frac{\text{परमाल्पद्युज्या} \times \text{रविकर्ण} - १}{\text{भूत्रिज्यापरभक्रांज्या}} = \text{स्प}^{-१}\ \text{सूचीशीर्षकोणार्ध} \cdots\cdots (\text{क})$$

यदि च परमाक्रान्तिः दक्षिणा स्यात्तदा—

$$\frac{\text{परमाल्पद्युज्या} \times \text{रविकर्ण}}{\text{भूत्रिज्या} + \text{भूत्रिज्या} = \text{परमा क्रान्तिज्या}} = \text{स्प}^{-१}\ \text{परमाल्पसूचीकोणार्द्ध} \cdots\cdots (\text{ख})$$

रविकर्णः ९३००००००० मीलात्मकम् । भूत्रिज्या ४००० मीलात्मिका । एतेनावसीयते यद् रविपरमलम्बनकोटिकोणात्रमेव शङ्कुसूचीकोणार्द्धमानं स्यात् । क, ख समीकरणयोरंशराशेरपेक्षया हरराशिः रवीवाल्पा । भूपृष्ठे क्वापि शङ्कोः स्थापनेन कोऽप्युल्लेखनीयोऽन्तरोपयोगो न स्यादित्यलम् ।

वाराणस्याम्
मौन्यमावास्यायाम्
२०३७ वै०
(४-२-१९८१ खै० वुधवासरे)

विदुषामाश्रवो
विद्यावारिधिः कृष्णचन्द्रद्विवेदी
अध्यक्षः,
ज्यौतिषविभागस्य
सं० सं० वि० वि० वाराणसी

# विषयानुक्रमणिका





।। श्रीजानकीवल्लभो विजयते ।।

म० म० श्रीसुधाकरद्विवेदनिर्मितम्

# भाभ्रमरेखानिरूपणम्

• • •

वारं वारं रामपादारविन्दं वन्दे वक्ष्ये यत्प्रसादावलम्बात् ।
सूचीक्षेत्रं यद्विचारेण चारु भाग्रज्ञानं जायते स्वस्वभूजे ।। १ ।।

रविकेन्द्राच्छङ्क्वग्रगामि सूत्रं स्वपृष्ठक्षितिजे यत्र लगति, शङ्कुमूलात् तदवधि छाया । एवं प्रतिक्षणं छायाज्ञानम् ।

अथ यदि रविक्रान्तिरेकस्मिन् दिने स्थिरा कल्प्यते, तदा तद्दिने चैकस्मिन्नहोरात्रवृत्त एव रविकेन्द्रं प्रवहवायुकारणेन भ्रमिष्यति । अतः शङ्क्वग्रात् तदहोरात्रवृत्तस्य प्रतिबिन्दुं कृता रेखास्तासां वर्धनेन या विरुद्धसूची तां स्वपृष्ठक्षितिजधरातलं यथा छिनत्ति तादृगेव भाभ्रमरेखा तस्य ज्ञानार्थं दीर्घवृत्तलक्षणे दीर्घवृत्त तूक्तमेव । अतिपरवलयपरवलयोः क्षेत्रयोस्तावदतिपरवलयं वच्मि ।

### अथातिपरवलयक्षेत्रम्

निश्चलचिह्नाद् यस्य परिधिस्थं रेखिका कृता विन्दुम् ।
याऽस्या निश्चलरेखापरि तद्बिन्दोः कृता लम्बः ।। २ ।।
अनयोर्यदि सम्बन्धो रूपानल्पो भवेत् समानश्च ।
अतिपरवलयक्षेत्रं विहितं तद्भाभ्रमोपयोगीह ।। ३ ।।




चित्रम् १

अत्राक्षादिसंज्ञा दीर्घवृत्तवत् । तद्यथा ना नियतबिन्दुरस्य क्षेत्रस्य नाभिः । कग अक्षरेखा । अक्षोपरि ना स्थानात् कृतस्य नाअ लम्बस्य मूलम् अ मूलबिन्दुः । नाअ सर्वदा स्थिरसंख्याऽस्ति, तद्योतकः = प । परिधिस्थ व बिन्दोः क ग अक्षोपरि तथा अ ना वर्धितरेखोपरि यौ व ल (= अ म), व म लम्बौ तौ क्रमेण व बिन्दोः क ग अक्षापेक्षया भुजकोटी भवतः । वना रेखा कृताऽस्ति । समानसम्बन्धद्योतकवर्णः = इ । एवं परिधिस्थात् च बिन्दोरपि कग अक्षोपरि चलं लम्बः कृतः । तथा नाच रेखा कृता । इत्थं यदि $\frac{\text{नाच}}{\text{चलं}} = \frac{\text{नाव}}{\text{वल}} = \text{इ} > १$, तदेदं क्षेत्रमतिपरवलयसंज्ञं ज्ञेयमिति ।

अत्रापि यदि व बिन्दोर्भुजः = वल = अम, कोटिः = वम, तदा वनाम जात्यत्रिभुजत्वात्

$$\text{वम}^२ = \text{वना}^२ - \text{नाम}^२$$

परन्तु $\frac{\text{ना व}}{\text{व ल}} = \text{इ} \therefore \text{वना} = \text{इ. वल} = \text{इ. अम} = \text{इ. भु}$

तथा $\text{नाम} = \text{अम} - \text{अना} = \text{भु} - \text{प}$

$\therefore \text{वम}^२ = \text{इ.}^२ \text{भु}^२ - (\text{भु} - \text{प})^२ \cdots\cdots\cdots (१)$

यद्यत्र वम = ०, अर्थाद् यदा व बिन्दुः स बिन्दौ स्यात्, तदा

$$\text{इ.}^२ \text{भु}^२ - (\text{भु} - \text{प})^२ = ०$$

वा $(\text{भु} - \text{प})^२ = \text{इ.}^२ \text{भु}^२$

पक्षयोर्मूलग्रहणेन

$$\text{भु} - \text{प} = \mp \text{इ. भु}$$

वा $\text{भु} \pm \text{इ. भु} = \text{प}$

वा $\text{भु} (१ \pm \text{इ}) = \text{प}$

$\therefore \quad \text{भु} = \frac{\text{प}}{१ \pm \text{इ}}$ ।

अत्र $\text{अस} = \text{अना} - \text{नास}$

परन्तु $\frac{\text{नास}}{\text{अस}} = \text{इ} \therefore \text{नास} = \text{इ. अस}$

$\therefore \quad \text{अस} = \text{अना} - \text{इ. अस}$

वा $\text{अस} + \text{इ.अस} = \text{अना}$

वा $\text{अस} (१ + \text{इ}) = \text{अना}$

$\therefore \quad \text{अस} = \frac{\text{अना}}{१ + \text{इ}} = \frac{\text{प}}{१ + \text{इ}}$ ।

अथ $\frac{\text{प}}{१ - \text{इ}}$ इयम् ऋणात्मिका तेन दिग्वैपरीत्येन

अस' = नास' − अना, परन्तु $\frac{\text{नास'}}{\text{अस'}}$ = इ । स' बिन्दोः क्षेत्रस्थत्वात् ।

∴ नास' = इ.अस'

∴ अस' = इ.अस' − अना

वा अस' − इ. अस' = − अना

वा अस' (१ − इ) = − अना

∴ अस' = $\frac{-\text{अना}}{१ - \text{इ}} = \frac{-\text{प}}{१ - \text{इ}} = \frac{\text{प}}{\text{इ} - १}$

ततः स स' = अस + अस' = $\frac{\text{प}}{\text{इ} + १} + \frac{\text{प}}{\text{इ} - १} = \frac{२\, \text{इ}.\,\text{प}}{\text{इ}^२ - १}$ = २क

अयमेवात्र व्यासो यत्र क = $\frac{\text{इ}.\,\text{प}}{\text{इ}^२ - १}$ ।

अथ यदि स मूलबिन्दुर्यस्माद्भुजप्रवृत्तिस्तदा भुजः = भु = सम

तथा पूर्वभुजः = पूभु = अम = सम + अस = भु + अस

ततः नाव = इ. अम = इ. पूभु = इ (भु + अस)

$$= \text{इ}\left(\text{भु} + \frac{\text{प}}{\text{इ} + १}\right) = \text{इ}.\,\text{भु} + \frac{\text{इ}.\,\text{प}}{\text{इ} + १}$$

$$= \text{इ}.\,\text{भु} + \frac{\text{इ}.\,\text{प}\,(\text{इ} - १)}{(\text{इ} + १)\,(\text{इ} - १)} = \text{इभु} + \frac{\text{इ}.\,\text{प}}{\text{इ}^२ - १}(\text{इ} - १)$$

$$= \text{इ}.\,\text{भु} + \text{क}\,(\text{इ} - १)$$

तथा नाम = सम − नास परन्तु $\frac{\text{नास}}{\text{अस}}$ = इ ∴ नास = इ. अस

∴ नाम = सम − इ. अस = भु − $\frac{\text{इ}\,\text{प}}{\text{इ} + १}$

$$= \text{भु} - \frac{\text{इ}.\,\text{प}\,(\text{इ} - १)}{(\text{इ} + १)\,(\text{इ} - १)}$$

$$= \text{भु} - \frac{\text{इ}.\,\text{प}}{\text{इ}^२ - १}(\text{इ} - १) = \text{भु} - \text{क}\,(\text{इ} - १)$$

आभ्यां कोटिवर्गः = वम$^२$ = नाव$^२$ − नाम$^२$

$$= \{\text{इ}.\,\text{भु} + \text{क}\,(\text{इ} - १)\}^२ - \{\text{भु} - \text{क}\,(\text{इ} - १)\}^२$$

$$= \{\text{इ}.\,\text{भु} + \text{क}\,(\text{इ} - १) + \text{भु} - \text{क}\,(\text{इ} - १)\} \times$$

$$\{\text{इ}.\,\text{भु} + \text{क}\,(\text{इ} - १) - \text{भु} + \text{क}\,(\text{इ} - १)\}$$

$$=(\text{इ. भु}+\text{भु})\ (\text{इ. भु}-\text{भु}+\text{२ क. इ}-\text{२ क})$$
$$=\text{भु}\ (\text{इ}+\text{१})\ \{\text{भु}\ (\text{इ}-\text{१})+\text{२ क}\ (\text{इ}-\text{१})\}$$
$$=\text{भु}\ (\text{इ}+\text{१})\ (\text{इ}-\text{१})\ (\text{भु}+\text{२ क})$$
$$=(\text{इ}^{\text{२}}-\text{१})\ (\text{भु}^{\text{२}}+\text{२ क. भु.})\cdots\cdots\cdots(\text{२})$$

अथ यदि न व्यासदलबिन्दुरेव मूलबिन्दुर्यस्माद्भुजगणना, तदा

$$\text{नस}=\text{क}$$
$$\text{भुजः}=\text{भु}'=\text{नम}$$

$\therefore$ $\text{नम}-\text{नस}=\text{भु}'-\text{क}=\text{सम}=$ द्वितीयसमीकरणस्य भुजः

अर्थात् $\text{सम}=\text{भु}=\text{भु}'-\text{क}$

ततः (२) समीकरण एतन्मानोत्थापनेन

$$\text{वम}^{\text{२}}=(\text{इ}^{\text{२}}-\text{१})\ \{(\text{भु}'-\text{क})^{\text{२}}+\text{२ क}\ (\text{भु}'-\text{क})\}$$
$$=(\text{इ}^{\text{२}}-\text{१})\ (\text{भु}'^{\text{२}}-\text{क}^{\text{२}})\cdots\cdots\cdots(\text{३})$$

अत्र यावद्भुजस्य मानम् $<\ \pm$ क तावत्कोटेर्मानमसम्भवम्, तदधिके भुजे तु कोटेर्मानं द्विविधं दिग्विपरीतेन समानमेव, तेन

$$\text{वम}=\text{वं}\text{म}$$

एवमृणभुजेऽपि तदेव कोटिमानस्य द्वैविध्यम्, तस्मात्

$$\text{नम}=\text{नमं}$$

तथा $\text{वम}=\text{वंम}=\text{व}_{\text{१}}\text{मं}=\text{वं}_{\text{१}}\text{मं}$ ।

अतोऽक्षात् पार्श्वद्वयेऽतिपरवलस्य विभागद्वयं मिथः सर्वांशैः समानमेव ।

अथ यदि सस॑ व्यासोपरि लम्बरूपायां व्यासदलबिन्दुगामिन्यां कं न गं रेखायां च बिन्दुस्तथा गृहीतो यथा $\text{नच}^{\text{२}}=\text{नना}^{\text{२}}-\text{नस}^{\text{२}}$

$=(\text{नना}-\text{नस})\ (\text{नना}+\text{नस})=\text{नास. नांस}$,

तदा $\dfrac{\text{नच}^{\text{२}}}{\text{नस}^{\text{२}}}=\dfrac{\text{नना}^{\text{२}}-\text{नस}^{\text{२}}}{\text{नस}^{\text{२}}}=\dfrac{\text{नना}^{\text{२}}}{\text{नस}^{\text{२}}}-\text{१}$,

परन्तु $\text{नास}=\text{इ. अस}$, $\text{नासं}=\text{इ संअ}$

अनयोर्योगेन $\text{नास}+\text{नासं}=\text{इ}\ (\text{अस}+\text{सं अ})=\text{इ. ससं}$

वा $\text{ना नां}=\text{इ. ससं}$

वा $\text{२ नना}=\text{२ इ. नस}$

$\therefore$ $\text{नना}=\text{इ.नस}$

$$\therefore\ \frac{\text{नच}^{\text{२}}}{\text{नस}^{\text{२}}}=\frac{\text{इ}^{\text{२}}.\ \text{नस}^{\text{२}}}{\text{नस}^{\text{२}}}-\text{१}=\text{इ}^{\text{२}}-\text{१}$$

अत्रैव $नच^2 = अ^2$ = लघुव्यासार्धवर्गस्तथा नस = बृहद्व्यासार्धवर्गः कल्प्यः ।

$$\therefore \frac{\left(\frac{लव्या}{२}\right)^2}{\left(\frac{बृव्या}{२}\right)^2} = \frac{लव्या^2}{बृव्या^2} = इ^2 - १$$

अथ यदि $= क^2 (इ^2 - १) = अ^2$

वा $इ^2 - १ = \frac{अ^2}{क^2}$

$इ^2 - १$ अस्य मानम् (२) समीकरण उत्थापने,

तदा $वम^2 = \frac{अ^2}{क^2} (भु + २ भु. क)$ ........ ........(४)

(३) समीकरणे तन्मानोत्थापनेन

$$वम^2 = \frac{अ^2}{क^2} (भु^2 - क^2) \text{......................(५)}$$

(५) समीकरणे यदि भु = ०, तदा

$वम^2 = \frac{अ^2}{क^2} (० - क^2) = - अ^2$ अस्य मूलमसम्भवमेव ।

एवं २ क = बृहद्व्यासमानम्, $अ^2$ = लघुव्यासार्धवर्गं च प्रकल्प्य दीर्घवृत्तवदत्रापि प्रायो बहवो विशेषा विभावनीयाः ।

यथात्रापि ना, नां नामितंज्ञे कल्प्ये, तदा

$अम = न म - नअ = न म - (न स - अ स) = भु' - क + \frac{प}{इ + १}$ ततः नाव = इ. अम. = इ. $(भु' - क + \frac{प}{इ + १}) = इ. भु' - इ. क + \frac{इ. प}{इ + १}$ एवं अंम = न म + अंन = नम + अन = नम + (सन − अस)

$$= भु' + क - \frac{प}{इ + १}$$

ततः $नांव = इ. अंम = इ \left(भु' + क - \frac{प}{इ + १}\right)$

$$= इ. भु' + इ. क - \frac{इ. प}{इ + १}$$

अनयोरन्तरम् × नां व – नाव

$$= (इ. भु' + इ क - \frac{इ प}{इ + १}) - (इ भु - इ क + \frac{इ. प}{इ + १})$$

$$= २इ. क - \frac{२ इ. प}{इ + १} = २ इ. क - २ क (इ - १)$$

$$= २ क \cdots \cdots \cdots \cdots \cdots \cdots \cdots \cdots \cdots (६)$$

अनेन

नाभिभ्यां वृत्तिबिन्दुं ये गते रेखे तदन्तरम् ।
क्षेत्रव्याससमं ज्ञेयमस्मिन् क्षेत्रे विदा सदा ।। ४ ।।

इत्युपपन्नं भवति ।

अथैवमत्रापि नांवना कोणार्धकारिणी रेखा व बिन्दौ स्पर्शरेखा भवति ।

यथा वर रेखा कोणार्धकारिणी तदेयं स्पर्शरेखा व बिन्दौ भविष्यति ।

अथ यदीयं न स्पर्शरेखा तदान्यत्र क्षेत्रपरिधौ च बिन्दावपि योगस्तदा वर रेखोपरि नार लम्बकरणेन (वर रेखाया वर्धनेन नांव रेखायां यत्र लगति तत्रैव लं' बिन्दुर्ज्ञेयः)

च लं' = चना

तथा नां लं = नां व – व लं' = नां व – नाव = २ क

परन्तु नां लं' च त्रिभुजे नां लं' + लं' च > नांच

अथ नां लं' + व लं' = नां व यदा व बिन्दौ स्पर्शरेखा भवति ।

यदि च बिन्दौ स्पर्शरेखा चेत्तदा (·) समाकरणेन

नां लं' · चलं' = नां च इति भवितुमर्हति ।

इदं परस्परविरुद्धमत उक्तमेव तथ्यमेवमन्येऽपि विशेषा बोध्याः ।

इत्यतिपरवलयक्षेत्रम् ।

---

## अथ परवलयक्षेत्रम्

या स्यान्निश्चलचिह्नाद् यत्क्षेत्रस्य वृत्तिस्थबिन्दुमत्र ।
रेखाऽथो तद्बिन्दोर्यो लम्बो नियतरेखिकासंस्थः ।। ५ ।।
अनयोर्मिती समाने यर्हि भवेतां सदा तदा नूनम् ।
परवलयाख्यं क्षेत्रं भवति विचित्रं बहूपयोगीह ।। ६ ।।




चित्रम् २

यथात्र यदि $\frac{\text{ना व}}{\text{व ल}} = \frac{\text{ना च}}{\text{च ल'}} = \text{इ} = १$

अर्थाद् ना व = व ल  वा नाच = चलं  इत्यादि, तदा व च स वं क्षेत्रं परवलय-संज्ञं ज्ञेयमिति ।

अथात्र यदि कग अक्षरेखापेक्षया अम = पूर्वभुजः = पू भु

तथा अना = अस + सना परन्तु $\frac{\text{सना}}{\text{अभ}} = \text{इ} = १$ ∴ अस = सना

∴ अना = अस + अस = २ अस = २ क यत्र अस = क,

तदा  $\text{वम}^२ = \text{वना}^२ - \text{नाम}^२ = \text{अम}^२ - (\text{अम} - \text{अना})$

$= \text{पू भु}^२ - (\text{पू भु} - २\ \text{क})^२$ ...... .... .... .... ... १)

अत्र यदि वम = ०,

तदा  $\text{पूभु}^२ - (\text{पूभु} - २\ \text{क})^२ = ०$

वा  $\text{पूभु}^२ = (\text{पूभु} - २\ \text{क})^२$

∴  $\pm \text{पू भु} = \text{पू भु} - २\ \text{क}$

(१)  यदि  पूभु = पूभु − २क

वा  ० = क

वा पूभु × ० = क

∴ पूभु $= \frac{\text{क}}{०}$

(२) यदि − पूभु = पूभु − २क

वा २पूभु = २क

∴ पूभु = क

अतोऽस्य क्षेत्रस्य अना लम्बेन सह द्वितीयो योगो न तथा

अस = क = सना ।

एवं यदि स मूलबिन्दुर्यस्माद्भुजप्रवृत्तिस्तदा सम = भु

तथा पूर्वभुजः = अम = सम + अस = भु + क

ततः (१) समीकरणे पूर्वभुजमानोत्थापनेन

वम$^2$ = (भु + क)$^2$ − { (भु + क) − २क }$^2$

= (भु + क $^2$ − (भु − क)$^2$

= ४क.भु ..................................(२)

अत्रापि भुजकोटिभ्यां दीर्घवृत्तवद् विशेषगुणाश्चिन्त्याः ।

अत्र परवलये ल व ना कोणस्यार्धकारिणो रेखा व बिन्दौ स्पर्शरेखा भवति । यद्येवं न तर्हि कल्प्यतेऽन्यत्रापि च बिन्दौ योगः, तदा नाल रेखोपरि वह रेखालम्बस्तेन नाच = चल

परन्तु क्षेत्रलक्षणेन नाच = चल'

∴ चल = चल'

अर्थात् कोटिकर्णौ तुल्यौ जातावत इदं न युक्तम् ततः पूर्वोक्तमेव युक्तम् ।

अथ यदि वट स्पर्शरेखा

तदा ∠नावट = ∠लवट

परन्तु वल, नाट रेखे मिथ समानान्तरे तेन

∠लवट = ∠वटना

ततः नाठ = नाव = अम = सम + अस

∴ टस + अस = सम + अस

पक्षयोः अस समशोधनेन

टस = सम

टवम, टहस त्रिभुजयोः हस रेखा वम − रेखासमानान्तरा तेन

$$\frac{\text{टह}}{\text{हव}} = \frac{\text{टस}}{\text{सम}}$$

परन्तु टस = सम

∴        टह = हव

एवमत्रापि बहवो विशेषाश्चिन्त्याः ।

इति परवलयक्षेत्रम् ।

---




चित्रम् ३

अथ कल्प्यते अ च ज विषमा सूची यत्र अ पृष्ठस्थशङ्क्वग्रविन्दुः । च, ज याम्योत्तरा-होरात्रवृत्तसम्पातविन्दू । च ज रेखा कृता, तदा च ज व्यासोत्पन्नं रवेरहोरात्रवृत्तमेवाधारः । तथाधारवृत्तधरातलोपरि अ च ज त्रिभुजस्य धरातलं याम्योत्तरवृत्तधरातलाभिन्नं लम्बरूपम्, तत्त्रिभुजधरातले स प पं पृष्ठक्षितिजधरातलं च लम्बरूपम्, यतः पृष्ठक्षितिजधरातलोपरि याम्योत्तरवृत्तधरातलं लम्बरूपम् । येन पृष्ठक्षितिजधरातलेन छेदिता शङ्क्वग्राद् वर्धितविरुद्धसूची जातं स प छेदनक्षेत्रपरिधिचापमानं माभ्रमरेखारूपं यत्र कोऽपि प बिन्दुर्यल्लग्नं सूच्याधारवृत्त-समानान्तरं क प ग पं धरातलं तथा क ग, स सं रेखे लम्बरूपधरातलतत्त्रिभुजधरातलयोगरेखे, अर्थात् च ज आधारवृत्तसमानान्तरेण धरातलेन विरुद्धसूची छिन्ना तस्य धरातलस्य तथा अ च ज स्थिरत्रिभुजधरातलस्य योगरेखा = क ग । एवं विरुद्धसूची लम्बरूपपृष्ठक्षितिजधरातलेन छिन्ना तस्य धरातलस्य तथा अ च ज त्रिभुजधरातलस्य योग रेखा = स सं । लम्बरूपधरातलयोर्योग-रेखा, अर्थात् पृष्ठक्षितिजधरातलसमानान्तरधरातलयोर्योगरेखा च पटपं कल्प्या, तदा रेखागणितस्यैकादशाध्यायेन पट रेखा त्रिभुजधरातले लम्बो भवति । कग रेखा नवीनसूच्याधारवृ स्य कपगपं संज्ञकस्य व्यासरेखा ।

अथ यदि सप वक्रक्षेत्रस्य स मूलबिन्दुर्यस्माद्भुजप्रवृत्तिः, तदा

सट = भुजः, पट = कोटिः ।

२

तदा रेखागणितस्य तृतीयाध्यायेन

$$\text{पट}^2 = \text{कट} \times \text{टग}$$

अथ च यदि $\angle$ अकग = क, $\angle$अगक = ग, $\angle$ अससं = स, $\angle$ कअग = अ, अस = न, तथा अक-रेखासमानान्तरा टड रेखा, कग-रेखासमानान्तरा सत रेखा च, तदा सटग त्रिभुजे कोणानुपातेन

$$\text{टग} = \frac{\text{सट} \times \text{ज्याटसग}}{\text{ज्याटगस}} = \frac{\text{भु} + \text{ज्या}\ (\ १८० - < \text{अससं}\ )}{\text{ज्याग}}$$

$$= \frac{\text{भु} \times \text{ज्याअससं}}{\text{ज्याग}} = \frac{\text{भु} \times \text{ज्यास}}{\text{ज्याग}}\ ।$$

असत त्रिभुजे च

$$\text{सत} = \frac{\text{अस} \times \text{ज्यातअस}}{\text{ज्याअतस}} = \frac{\text{न} \times \text{ज्याअ}}{\text{ज्याअकग}} \times \frac{\text{न} \times \text{ज्याअ}}{\text{ज्याक}}$$

यदि अक-रेखासमानान्तरा टड रेखा अग रेखायां ल बिन्दौ लगति, तदा

$$\angle \text{टलस} = \angle \text{तअस} = \text{अ}$$

एवं टडस त्रिभुजे

$$\angle \text{डटस} = १८० - (< \text{अससं} + < \text{टलस})$$
$$= १८० - (\text{स} + \text{अ})$$

$$\text{तथा} < \text{टडस} = १८० - \angle \text{लडस}$$
$$= १८० - \angle \text{अतस} = १८० - \angle \text{अकग}$$
$$= १८० - \text{क},$$

$$\text{तदा}\quad \text{डस} = \frac{\text{सट} \times \text{ज्याडटस}}{\text{ज्याटडस}} = \frac{\text{भु} \times \text{ज्या}\ [\ १८० - (\text{स} + \text{अ})\ ]}{\text{ज्या}\ (१८० - \text{क})}$$

$$= \frac{\text{भु} \times \text{ज्या}\ (\text{स} + \text{अ})}{\text{ज्याक}}$$

$$\text{अस्मात्}\quad \text{कट} = \text{तड} = \text{सत} - \text{डस}$$

$$= \frac{\text{न. ज्या अ}}{\text{ज्याक}} - \frac{\text{भु. ज्या}\ (\text{स} + \text{अ})}{\text{ज्याक}}$$

$$= \frac{\text{न. ज्याअ} - \text{भु ज्या.}\ (\text{स} + \text{अ})}{\text{ज्याक}}$$

$$\text{ततः}\quad \text{पट}^2 = \text{कट} \times \text{टग}$$

$$= \frac{\text{भु ज्यास}}{\text{ज्याग}} \left\{ \frac{\text{न. ज्या अ} - \text{भु. ज्या}\ (\text{स} + \text{अ})}{\text{ज्याक}} \right\} \quad (१)$$

अथ यदि सट × संट = पद$^2$ तदा छेदनक्षेत्रं वृत्तं प्रसिद्धमेव,
परन्तु तदा सट × टसं = कट × टग

$$\therefore \frac{\text{सट}}{\text{टग}} = \frac{\text{कट}}{\text{टस}'}$$

तेन रेखागणितस्य षष्ठाध्यायेन कटसं, सटग त्रिभुजे मिथः सजातीये
यतः ∠क ट सं = ∠स ट ग
∴ ∠अ न सं = ∠अ क ग
अतः स = क
तदा

ते कोणमाने समदिग्गते वा विभिन्नदिक्स्थे भवतः समाने ।
सदा विदा छेदनजातरूपं वेद्यं तु नूनं वलयानुकारम् ॥

इत्यनेन पूज्यपादपितृकृतप्रतिमाबोधकग्रन्थस्थेन सूत्रेण छेदनक्षेत्रं वृत्तं भवति । अतो यदि स, क कोणौ मिथो न तुल्यौ, तदा यदि

ज्या (स + अ) = ज्य [१८० − (स + अ)] = ज्या स ट ड इयमृणात्मिका स्यात्, तदा सट रेखा डट रेखाया अन्यदिशि अच रेखायां कुत्रापि लगिष्यति । तस्मात् सट योगरेखा वर्धित-सूची स बिन्दौ न लगत्यतस्तत्र दीर्घवर्त्तुलाभावः । अत एव यदि ज्या (स + अ) इयं सर्वदा धनात्मिका, तदा (१) समीकरणेन तत् क्षेत्रं दीर्घवर्त्तुलम्, तत्र

$$\text{पट}^2 = \text{कट.टग}$$

परन्तु क सं ट त्रिभुजे

$$\text{कट} = \frac{\text{सं ट} \times \text{ज्या क सं ट}}{\text{ज्या सं क ट}}$$

$$= \frac{\text{स ट} \times \text{ज्या } [\,१८० - (\text{स} + \text{अ})\,]}{\text{ज्या } (\,१८० - \text{क}\,)}$$

$$= \frac{\text{भु ज्या } (\text{स} + \text{अ})}{\text{ज्याक}}$$

$$\text{तथा} \qquad \text{टग} = \frac{\text{भु. ज्यास}}{\text{ज्याग}}$$

$$\therefore \text{पट}^2 = \text{क ट. ट ग} = \frac{\text{भु ज्या } (\text{स} + \text{अ}) \times \text{भु ज्यास}}{\text{ज्याग. ज्याक}} =$$

$$\frac{\text{भु}^2\text{. ज्या } (\text{स} + \text{क}\ )\text{. ज्यास}}{\text{ज्याग. ज्याक}}$$

$$\therefore \frac{\text{पट}^2}{\text{भु}'.} = \frac{\text{ज्या } (\text{स} + \text{अ})\ \text{ज्यास}}{\text{ज्याग. ज्याक}}$$

अत्र गु = सट = सट' = बृहद्व्यासदलम्, पट = लघुव्यासदलम् ।

तेन

$$\frac{\left(\frac{\text{लव्या}}{२}\right)^{२}}{\left(\frac{\text{बृव्या}}{२}\right)^{२}} = \frac{\text{ज्या}\,(\text{स} + \text{अ})\ \text{ज्यास}}{\text{ज्याग. ज्याक}}$$

$$\therefore \frac{\text{लव्या}^{२}}{\text{बृव्या}^{२}} = \frac{\text{ज्या}\,(\text{स} + \text{अ}).\ \text{ज्यास}}{\text{ज्याग. ज्याक}}$$

कल्प्यते सस' रेखायां ना, ना' नाभिबिन्दू । प क्षेत्रस्थबिन्दुः । नाप, ना'प रेखे कार्ये । स-बिन्दुदिक्स्थाक्षरेखायाम् अ तथा स'-बिन्दुदिक्स्थाक्षरेखायाम् अ' क्रमेण मूलबिन्दू । अनयोरुपरि प बिन्दोः म प म' लम्बः कार्यः । स-दिक्स्थाक्षरेखायां म बिन्दौ तथा स'-दिक्स्थाक्षरेखायां म' बिन्दौ क्रमेण लगति ।

तदा नाप = इ. पम

ना'प = इ. पम'

अनयोर्योगेन

नाप + ना'प = इ ( पम + पम' ) = इ ( टअ + टअ' )

= इ. अ अ'

परन्तु नास = इ. अ स

नास' = इ. अ स' = इ. अ' स

अनयोर्योगेन

नास + ना'स = इ ( अस + अ' स )

∴ स स' = इ. अ अ'

∴ नाप + ना'प = स स'

परन्तु नापट, ना'पट त्रिभुजयोः

टना = टना', पट भुज उभयनिष्ठः

∠ नाटप = ∠ ना'टप = १ समकोणः

∴ नाप = ना'प

वा २ नाप = सस' = २ सट

∴ नाप = सट

एवं नास = इ. अस

नास' = इ. अस'

अनयोरन्तरेण

नास' − नास = इ ( अस' - अस )

वा नान' = इ. सस'

वा २ नाट = २ इ. सट

∴ नाट = इ. सट

तदा $$\frac{\text{लव्या}^2}{\text{वृव्या}^2}=\frac{\text{पट}^2}{\text{सट}^2}=\frac{\text{नाप}^2-\text{नाट}^2}{\text{सट}^2}=\frac{\text{सट}^2-\text{नाट}^2}{\text{सट}^2}$$

$$=१-\frac{\text{नाट}^2}{\text{सट}^2}=१-\frac{\text{इ}.^2\ \text{सट}^2}{\text{सट}^2}$$

$$=१-\text{इ}^2 \text{।}$$

$$\therefore\quad \frac{\text{वृव्या}^2}{\text{लव्या}^2}=\frac{१}{१-\text{इ}^2}$$

$$\therefore\quad १-\text{इ}^2=\frac{\text{ज्यास. ज्या (स + अ)}}{\text{ज्याग. ज्याक}}$$

अथवा $$\frac{१}{१-\text{इ}}=\frac{\text{ज्यास. ज्या (स + अ)}}{\text{ज्याग. ज्याक}}$$

इदं स्वरूपं तदैव स्याद् यदा ज्यास. ज्या (स + अ) > ज्याग. ज्याक ।

पुनस्तत्रैव अम-अक्षरेखापेक्षया

$$\text{भुजः}=\text{पम}=\text{सट}+\text{अस}=\text{भु}=\frac{\text{प}}{१+१}$$

$$\therefore\quad \text{नाप}=\text{इ. पम}=\text{इ}\left(\text{भु}+\frac{\text{प}}{१+\text{इ}}\right)$$

तथा $$\text{नाट}=\text{सट}-\text{नास}=\text{सट}-\text{इ. अस}=\text{भु}-\frac{\text{इ. प}}{१+\text{इ}}$$

$$\therefore\quad \text{पट}^2=\text{नाप}^2-\text{नाट}^2=\left(\text{इ. भु}+\frac{\text{इ. प}}{\text{इ}+१}\right)^2-\left(\text{भु}-\frac{\text{इ. प}}{१+\text{इ}}\right)^2$$

$$=\text{भु}\ (१+\text{इ})\ \left\{\text{इ. भु}-\text{भु}+\frac{२\ \text{इ. प}}{१+\text{इ}}\right\}$$

$$=\text{भु}\ (१+\text{इ})\ \left\{\text{भु}\ (\text{इ}-१)+\frac{२\ \text{इ. प}}{१+\text{इ}}\right\}$$

$$=\text{भु}\ (१+\text{इ})\ \left\{\frac{२\ \text{इ. प}}{१+\text{इ}}-\text{भु}\ (१-\text{इ})\right\}$$

$$=\text{भु}\ (१+\text{इ})\ \{२\ \text{क}\ (१-\text{इ})-\text{भु}\ (१-\text{इ}\}$$

$$=\text{भु}\ (१+\text{इ})\ (१-\text{इ})\ (२\ \text{क}-\text{भु})$$

$$=(१-\text{इ}^2)\ (२\ \text{क. भु}-\text{भु}^2)$$

परन्तु $१-\text{इ}^2=\frac{\text{ज्यास. ज्या (स + अ)}}{\text{ज्याग. ज्याक}}$ तथा २ क = ससं ।

पुनः असस॑ त्रिभुजे

$$सस॑ = \frac{अस \times ज्याअ}{ज्या\angle अ॑सस} = \frac{न \times ज्याअ}{ज्या \{१८०-(स + अ)\}}$$

$$= \frac{न.\ ज्याअ}{ज्या (स + अ)}$$

$$\therefore \quad पट^2 = \frac{ज्यास\ \ ज्या (स + अ)}{ज्याग.\ ज्याक} \left\{ \frac{न.\ ज्याअ.\ भु}{ज्या (स + अ)} - भु \right\}$$ ।

अथातिपरवलये तु − भु. ज्या (स + अ) इयं धनात्मिका, अर्थात् ज्या (स + अ) इयम् ऋणात्मिका भविष्यति, तदा सट रेखा अन्न दिशि लगिष्यति ततः

$\angle$ अस॑स = $\angle$ ड ट स = ६० − (स + अ) = $\angle$ क स॑ ट

अतः अस॑स त्रि भुजे पूर्वानुपातवत्

$$सस॑ = \frac{न.\ ज्याअ}{ज्या \{३६०-(स + अ)\}} = २ क$$

तथा कस॑ट त्रिभुजे

$$कट = \frac{भु.\ ज्या \{३६० - (स + अ)\}}{ज्याक}$$

$$टग = \frac{भु\ \ ज्यास}{ज्याग}$$

$$\therefore \quad पट^2 = कट.\ टग = \frac{भु.^2\ ज्यास.\ ज्या \{३६० - (स + अ)\}}{ज्याग.\ ज्याक}$$

$$\therefore \quad \frac{पट^2}{भु^2} = \frac{ज्यास.\ ज्या \{३६० - (स + अ)\}}{ज्याग.\ ज्याक}$$

$$परन्तु\ \frac{पट^2}{भु} = \frac{लज्या^2}{वृज्या^2} = इ^2 - १$$

$$\therefore \quad इ^2 - १ = \frac{ज्यास.\ ज्या \{३६० - (स + अ)\}}{ज्याग.\ ज्याक}$$

एवं परवलये ज्या (स + अ) = ज्या { १८० − (स + अ) } = ज्यासटड = ० = $\angle$ कस॑ट, तदा सट रेखैव टड रेखा स्यात्। अर्थात् अक रेखा समानान्तरा सट रेखा। अतः परिभाषयार्थात् सूचीकर्णसमानान्तरेण धरातलेन यदा सूची छिद्यते, तदा छेदनप्रदेशस्य परवलयत्वं भवति। ततः

$$पट^2 = कट . टग = टग \, (सत - डस)$$

$$= \frac{भु \; ज्यास}{ज्याग} \left\{ \frac{न . ज्या अ - भु . ज्या (स+अ)}{ज्याक} \right\}$$

परन्तु $ज्या(स+अ) = ०$

$$\therefore पट^2 = \frac{ज्यास . ज्याअ . न . भु .}{ज्याग . ज्याक}$$

अथ परवलयक्षेत्रशीर्षकस्थ – (२) समीकरणेन

वम $= ४ क . भु .$ परन्त्वत्र वम $=$ पट

$$\therefore पट^2 = ४ क . भु$$

वा $\frac{पट^2}{भु} = ४ क$

परन्तु $पट^2 = \frac{ज्यास . ज्याअ . न \; भु}{ज्याग . ज्याक}$

$$\therefore ४ क = \frac{ज्यास \; ज्याअ . न \; भु}{ज्याग . ज्याक . भु} = \frac{ज्यास \; ज्याअ . न}{ज्याग . ज्याक} ।$$

एभ्यः सूत्रावतारः

त्रिभुजस्य शिरोऽस्त्रमम्मुखो यः किल कोणो ध्रुवसंज्ञकः स एव ।
निजभूमिजतत्त्रिबाहुयोगोद्भवरेखात्रिभुजैकदोर्भवो वै ॥ ७ ॥
ध्रुवशिरोऽस्त्रयुतिर्भदलाल्पिका तदधिका च समा भदलेन चेत् ।
भवति तर्हि विचिन्त्यमिह क्रमात् कथितमेव सदा कुटिलत्रयम् ॥ ८ ॥

अथ यदि ज च ख याम्योत्तरवृत्तं ख खस्वस्तिक च ज क्षितिजोर्ध्वस्याहोरात्रवृत्तस्य व्यासमानम् । अ शङ्क्वग्रम् अचज त्रिभुजं याम्योत्तरवृत्तधरातलीयं लम्बरूपमहोरात्रवृत्तधरातले ससं रेखा पृष्ठक्षितिजलम्बरूपत्रिभुजधरातलयोर्योगरेखा, तदा अचज कोणो नवत्यंशाधिकः ।

अससं कोणो नवत्यंशाल्पकः । तेन अससं सूची नं वृत्ताधारा किन्तु दीर्घवृत्ताकारा सदा पृष्ठक्षितिजोर्ध्वस्थेऽहोरात्रवृत्तस्य परिधौ । एवं यदा अज रेखासमानान्तरा पृष्ठक्षितिजतत्त्रिभुज-धरातलयोगरेखा, तदा षट्षष्टिभागाक्षापन्नविषयेषु परवलयाख्यं छेदनाकारं तदन्यत्र तदाकारं चातिपरवलयाख्यं ता एव तेषु देशेषु माभ्रमरेखाश्चेत्यलं पल्लवितेन ।

———

## अभ्यासार्थं प्रश्नाः

निरक्षदेशे छायाग्राकृतिं कथय चेदिह ।
खं क्रान्तिरस्ति काश्यां च कीदृशी साकृतिस्तथा ॥ ९ ॥

रविपरापमजा द्युतिजाकृतिर्भवति या गिरिजापतिपत्तने ।
कथय तत्र सुमित्र विचित्रतद्भुजजकोटिकलां किल गोलयोः ॥ १० ॥

भवति यत्र पलोऽद्रिनगांशका दिनपतौ मिथुनान्तमुपागते ।
कथय भाकृतिमस्ति मतेश्च चेद् गतिततिर्भवतः कुटिलत्रये ॥ ११ ॥

मेरौ मुरारेरपि यत्र वासश्छायाकृतिस्तत्र विचित्ररूपा ।
विहाय चैतत्कुटिलत्रयं या भवेत् समाचक्ष्व विचिन्त्य तां च ॥ १२ ॥

शङ्क्वग्रे यद्दृष्टिचिह्नं तदीयं यत् स्याद् विद्वन् दृग्भवं लम्बनं वै ।
दृक्तुल्ये तद्युक्तलम्बांशतुल्या यत्र क्रान्तिस्तत्र भारेखिका का ॥ १३ ॥

नतकालभवं विधाय सर्वं नरभाग्राचरदिग्लवादिमानम् ।
अपमांशमितेस्ततोऽङ्कनीया द्युतियन्त्रं भवतीति भाकृतिः सा ॥ १४ ॥

## अथोपसंहारे तद्वक्रक्षेत्रत्रयप्रशंसा भाप्रशंसा च

अतिपरवलयं परादिवृत्तं विदितगतिज्ञभवं तिरोहिताङ्कम् ।
गुणगणजनकं च दीर्घवृत्तं विदितगतिज्ञ भवन्ति रोहिताङ्कम् ॥ १५ ॥

रामक्षेत्रैरिलाजाता सुमित्राङ्कगता मुदा ।
शत्रुघ्नाक्षाङ्गुलनृभा साध्या भरतगैर्बुधैः ॥ १६ ॥

यमसौम्यकरैश्चित्रा भा विभाति सतारका ।
मित्रसौम्यकरैराढ्या शारदी रजनीव सा ॥ १७ ॥

रविणा द्विजराजेन कुजजाता बुधेन सा ।
गुरुणा कविना वेद्या छाया छायाभवान्यकम् ॥ १८ ॥

श्रीकाश्यां कमनीयमूर्त्तिरमलः पृथ्वोत्तराख्योऽस्ति यः ।
पञ्चक्रोशपतिश्च तत्र वसति श्रीमान् कृपालुर्द्विजः ॥
तज्जो मैथिलराजराजतनयाकान्तं नितान्तं मुदा ।
ध्यात्वैतद्द्युतिजं सुधाकरकृती चक्रे विदां प्रीतये ॥ १९ ॥

नवरामनवेन्दुविक्रमाब्दे सितघस्रे शुचिमासकृष्णपक्षे ।
द्युतिजातमभूदिदं समाप्तं गणकानन्दकृदष्टमीतिथौ च ॥ २० ॥

इति श्रीसुधाकरद्विवेदिनिर्मितं
भाभ्रमरेखानिरूपणं समाप्तम् ।

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते । तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०)" इति सङ्केतेन विधेयः ।



प्रकाशकः—निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः;
वाराणसी-२२१००२ (उ० प्र०) ।

# सुसंग्राह्याः

## महत्त्वपूर्णा अनुसन्धानप्रबन्धाः

१. अथर्ववेदे शान्तिपुष्टिकर्माणि—[ वेदः ] श्रीमत्या मायामालवीयया वैदिकवाङ्मयस्यानुशीलनं कृत्वा विरचितः । ८-००

२. पाणिनीयव्याकरणे प्रमाणसमीक्षा—[ व्याकरणम् ] श्रीमता रामप्रसादत्रिपाठिना विरचिता । २६-२५

३. प्रक्रियाकौमुदीविमर्शः—[ व्याकरणम् ] डॉ० आद्याप्रसादमिश्रेण लिखितः । ८-००

४. ग्रहगणितमीमांसा—[ ज्यौतिषशास्त्रम् ] डॉ० मुरारिलालशर्मणा विरचिता । ५-५०

५. सूर्यग्रहणम्—[ ज्यौतिषशास्त्रम् ]—डॉ० कृष्णचन्द्रद्विवेदिना विरचितम् । इह सूर्यग्रहणस्यार्वाचीनां पद्धतिमनुसृत्यानुसन्धानिकाः सिद्धान्ताः समुपन्यस्ता विदुषा लेखकेन— १२-००

६. प्राच्यभारतीयम् ऋतुविज्ञानम्—[ ऋतुविज्ञानशास्त्रम् ]—डॉ० धुनीरामत्रिपाठिना संरचितम् । विज्ञानमयोऽयं प्रबन्धो नूनं संस्कृतवाङ्मयस्य श्रियं समेधयति— १८-००

७. कातन्त्रव्याकरणविमर्शः—[ व्याकरणम् ]—प्रबन्धलेखकेन विदुषा डॉ० जानकीप्रसादद्विवेदिना भृशमत्र कातन्त्रीयाः शब्दशास्त्रीयाः पदार्था विमृष्टाः— ४०-००

८. महाभाष्यनिगूढाकूतयः—[ व्याकरणम् ]— अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते । लेखकः सम्पादकश्च डॉ० देवस्वरूपमिश्रः— २६-८०

९. पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः—[ दर्शनशास्त्रम् ] अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च सांख्ययोगपदार्था विवेचिताः— ३२-८०

१०. वैशेषिकसिद्धान्तानां गणितीयपद्धत्या विमर्शः—[ दर्शनशास्त्रम् ]—गवेषणाप्रबन्धेऽस्मिन् वैशेषिकसिद्धान्तानां गणितीयसिद्धान्तमूलकं विश्लेषणं विहितम्— २४-६०

११ वैयाकरणानाम् अन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः—[ व्याकरणम् ]—अनुसन्धानप्रबन्धोऽयं विदुषा डॉ० कालिकाप्रसादशुक्लेन लिखितः— २६-५०

१२. धात्वर्थविज्ञानम्—[ व्याकरणम् ]—गवेषणाप्रबन्धोऽयं बहुभाषाविज्ञेन डॉ० भागीरथप्रसादत्रिपाठिना विरचितः— ३१-००

१३. भारतीयकर्मकाण्डस्वरूपाध्ययनम्—[ कर्मकाण्डविषयकः ]—अनुसन्धानप्रबन्धोऽयं डॉ० विन्ध्येश्वरीप्रसादत्रिपाठिना लिखितः— २६-००

---

प्राप्तिस्थानम्—विक्रयविभागः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी–२२१००२.